श्रीकृष्णाय नमः ॥ उक्तस्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः ॥ अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥१॥ उक्तो लयावधित्वेन प्राकृता
त्यंतिके लये ॥ अधिष्ठानतया चोक्तो महापुरुषलक्षणे ॥२ ॥ तत्र तु प्रथमे मावि मागधान्वयभूमिपान् ॥ कलिप्रभावतः प्राह संकरादिमलीम
सान् ॥ ३ ॥ राजोवाच ॥ हे मुने ! कृष्णे स्वधामानुगते सति पृथ्व्यां कस्य वंशो बभूव तद्वद ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! बृहद्रथवं
शीयाः भाव्याः श्रुतश्रवइत्यादयो रिपुंजयांताः नवमे निरूपिताः तत्र योंऽत्यो रिपुंजयः स एव पुरंजयः । तस्यामात्यः शुनकः स स्वामिनं
पुरंजयं हत्वा स्वसुतं प्रद्योतसंज्ञं राजानं करिष्यति । तस्य पालकः ॥ २ ॥ तस्य विशाखयूपः । तस्य राजकः । तस्य नंदिवर्द्धनः एते प्रद्योत

श्रीकृष्णाय नमः ॥ ॐ राजोवाच ॥ स्वधामानुगते कृष्णे यदुवंशविभूषणे ॥ कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे
मुने ॥१॥ श्रीशुक उवाच॥ योऽन्त्यः पुरंजयोनाम भाव्यो बार्हद्रथो नृप ॥ तस्यामात्यस्तु शुनको हत्वा स्वामिनमा
त्मजम् ॥ प्रद्योतसंज्ञं राजानं कर्ता यत्पालकः सुतः ॥ २॥ विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥ नंदिवर्धनस्त
त्पुत्रः पञ्च प्रद्योतना इमे ॥ ३ ॥ अष्टत्रिंशोत्तरशतं भोक्ष्यंति पृथिवीं नृपाः ॥ शिशुनागस्ततो भाव्यः काकवर्णस्तु
तत्सुतः ॥ क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥ ४ ॥ विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ॥ दर्भकस्त
त्सुतो भावी दर्भकस्याजयः स्मृतः ॥ ५ ॥ नंदिवर्धन आजेयो महानंदिः सुतस्ततः ॥ शिशुनागो दशैवैते षष्ट्यु
त्तरशतत्रयम् ॥ ६ ॥ समा भोक्ष्यंति पृथवींकुरुश्रेष्ठ कलौ नृपाः ॥ महानंदिसुतो राजञ्छूद्रीगर्भोद्भवो बली ॥ ७ ॥
महापद्मपतिः कश्चिन्नंदः क्षत्रविनाशकृत् ॥ ततो नृपा भविष्यंति शूद्रप्रायास्त्वधर्मिकाः ॥८॥ एकच्छत्रां स पृथिवी
मनुल्लंघितशासनः ॥ शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ ९ ॥

नसंज्ञाः पंच नृपाः ॥ ३ ॥ अष्टात्रिंशदुत्तरशतम् १३८ वर्षाणि कलौ भूमिं भोक्ष्यंति । ततो भावी शिशुनागः । तस्य काकवर्णः । तस्य
क्षेमधर्मा । तस्य क्षेत्रज्ञः ॥ ४ ॥ तस्य विधिसारः । तस्याऽजातशत्रुः । तस्य दर्भकः । तस्याजयः ॥ ५॥ तस्य नंदिवर्धनः । तस्य महानंदी ।
एते दश नृपाः षष्ट्युत्तरशतत्रयं ३६० वर्षाणि ॥ ६ ॥ कलौ भुवं भोक्ष्यंति । ततो महानंदिसुतः शूद्रीगर्भोद्भवो नंदनामा भावी ॥ ७॥ ततः
शूद्रप्रायाः अधार्मिकाः नृपा भविष्यंति ॥ ८ ॥ स नंदः एकच्छत्रां पृथ्वीं पालयिष्यति द्वितीयः परशुराम इव ॥ ९ ॥

तस्य सुमाल्यप्रमुखाः अष्टौ सुताः शतं वर्षाणि महीं भोक्ष्यंति॥ १०॥ ततः एतान् नव नंदान् कश्चित् चाणक्यो द्विजः उन्मूलयिष्यति ततस्तेषामभावे मौर्यसंज्ञा नृपाः महीं भोक्ष्यंति ॥ ११ ॥ स चाणक्यो द्विजो मौर्येषु प्रथमं चंद्रगुप्तं राज्येऽभिषेक्ष्यति । तस्य पुत्रो वारिसारः । तस्याऽशोकवर्धनः ॥ १२ ॥ तस्य सुयशाः । तस्य संगतः । ततः शालिशूकः । तस्य सोमशर्मा ॥ १३ ॥ तस्य शतधन्वा । तस्य बृहद्रथः । तत्प्रथमो दशरथश्चेति पराशरादिभिरुक्तः । एते दश मौर्याः १३७ सप्तत्रिंशदुत्तरशतवर्षाणि कलौ महीं भोक्ष्यंति॥ १४ ॥ बृहद्रथस्य सेनापतिः

तस्य चाष्टौ भविष्यंति सुमाल्यप्रमुखाः सुताः ॥ य इमां भोक्ष्यंति महीं राजानः स्म शतं समाः ॥१० ॥ नव नंदान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति॥ तेषामभावे जगतीं मौर्या भोक्ष्यंति वै कलौ ॥११॥ स एव चंद्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥ तत्पुत्रो वारिसारस्तु ततश्चाशोकवर्धनः॥१२॥ सुयशा भविता तस्य संगतः सुयशः सुतः ॥ शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥१३॥ शतधन्वा ततस्तस्य भविता तद्बृहद्रथः॥ मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ समा भोक्ष्यंति पृथ्वीं कलौ कुरुकुलोद्वह ॥१४॥ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठोऽथ भविष्यति ॥ वसुमित्रो भद्रकश्च पुलिंदो भविता सुतः ॥ १५ ॥ ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति ॥ ततो भगवतस्तस्माद्देवभूतिरिति श्रुतः॥१६॥शुंगादशैते भोक्ष्यंति भूमिं वर्षशताधिकम्॥ततः काण्वानियं भूमिर्यास्यत्यल्पगुणान्नृप॥१७॥ शुंगं हत्वा देवभूतिंकण्वोऽमात्यस्तु कामिनम्॥स्वयं करिष्यते राज्यं वसुदेवो महामतिः॥१८॥तस्य पुत्रस्तु भूमित्रस्तस्य नारायणःसुतः ॥ काण्वायना इमे भूमिं चत्वारिंशच्च पंच च॥शतानि त्रीणि भोक्ष्यंति वर्षाणांच कलौयुगे॥१९॥

पुष्पमित्रः स स्वामिनं हत्वा राज्यं करिष्यति । शुंगानां प्रथमः । तस्याग्निमित्रः । तस्य सुज्येष्ठः । तस्य वसुमित्रः । तस्य भद्रकः । तस्य पुलिंदः॥ १५॥ तस्य घोषः । तस्य वज्रमित्रः । तस्य भागवतः । तस्य देवभूतिः ॥१६॥ एते दश शुंगा शताधिकवर्षाणिभूमिं भोक्ष्यंति । ततः इयं भूमिः स्वकल्पगुणान्काण्वान्यास्यति ॥१७॥ ततो देवभूतिनामकं शुंगं हत्वा तस्य प्रधानो वसुदेवनामा कण्वो राज्यं करिष्यति॥ १८॥तस्य भूमित्रः । तस्य नारायणः । तस्य सुशर्मा एते चत्वारः काण्वायनाः ५चचत्वारिंशदधिकत्रिशतं ३४५वर्षाणि कलौ महीं भोक्ष्यंति ॥ १९ ॥

ततः काण्वं सुशर्माणं हत्वा तत्सेवकोऽध्रजातीयो बली नाम शूद्रः कंचित्कालं गां भोक्ष्यति ॥ २० ॥ ततस्तद्भ्राता कृष्णनामा पृथ्वीपतिर्भवि
ष्यति । तस्य श्रीशांतकर्णः । तस्य पौर्णमासः ॥ २१ ॥ तस्य लंबोदरः । तस्य विकलः । तस्य मेघस्वातिः । तस्याटमानः ॥ २२ ॥ तस्या
निष्टकर्मा । तस्य हालेयः । तस्य तलकः । तस्य पुरुषभीरुः । तस्य सुनंदनः ॥ २३ ॥ तस्य चकोरः।तस्य बहुसंज्ञकाः अष्ट पुत्राः । नवमः
शिवस्वातिरिति । शिवस्वातेर्गोमतिः । तस्य पुरीमान् ॥ २४ ॥ तस्य मेदःशिराः । तस्य शिवस्कंदः । तस्य यज्ञश्रीः । तस्य विजयः । तस्य

हत्वा कण्वं सुशर्माणं तद्भृत्यो वृषलो बली॥गां भोक्ष्यत्यंध्रजातीयः कंचित्कालमसत्तमः॥२०॥कृष्णनामाऽथ तद्भ्रा
ता भविता पृथिवीपतिः॥ श्रीशांतकर्णस्तत्पुत्रः पौर्णमासस्तुः तत्सुत ॥२१॥ लंबोदरस्तु तत्पुत्रस्तस्माद्धि विकलो
नृपः॥ मेघस्वातिश्च विकलादटमानस्तु तस्य च ॥ २२॥ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः॥पुरीषभीरुस्त
त्पुत्रस्ततो राजा सुनंदनः ॥ २३ ॥ चकोरो नवमो यत्र शिवस्वातिररिंदम ॥ तस्यापि गोमतीपुत्रः पुरीमान् भविता
ततः ॥२४॥मेदःशिराः शिवस्कंदो यज्ञश्रीस्तत्सुतस्ततः ॥विजयस्तत्सुतो भाव्यश्चंद्रविज्ञः सलोमधिः॥२५॥एतेत्रिंश
न्नृपतयश्चत्वार्यब्दशतानि च॥षट्पंचाशच्च पृथिवीं भोक्ष्यंति कुरुनंदन॥२६॥सप्ताभीरा आवभृत्या दश गर्दभिनो
नृपाः॥ कंकाः षोडश भूपाला भविष्यंति च लोलुपाः॥२७॥ततोऽष्टौ यवना भाव्याश्चतुर्दश च पुष्कसाः॥भूयो दश
गुरुंडाश्च मौना एकादशैव तु॥एते भोक्ष्यंति पृथिवीं दशवर्षशतानि च ॥२८॥ नवाधिकां च नवतिं मौना एकादश
क्षितिम् ॥२९॥ भोक्ष्यंत्यब्दशतान्यंग त्रीणि तैः संस्थिते ततः॥किलकिलायां नृपतयो भूतनंदोऽथ वंगिरिः ॥३०॥

चंद्रविज्ञः । तस्य लोमधिः ॥ २५ ॥ एते त्रिंशद्राजानः षट्पञ्चाशदधिकचतुः शतानि ४५६ वर्षाणि भूमिं भोक्ष्यंति ॥ २६॥ ततः आभीराः
सप्त नृपाः । ततो गर्दभिनो नृपा दश कंका षोडश भविष्यंति ॥२७ ॥ ततोऽष्टौ यवनाः ।ततश्चतुर्दश पुष्कसाः ।ततो गुरुंडा दश । ततो मौनाः
एकादश ॥ २८ ॥ एते सर्वे मौनव्यतिरिक्ताः पंचषष्टिर्भूपाः ६५ एकोनैकादशशतानि १०९९ वर्षाणि भुवं भोक्ष्यंति ॥ २९ ॥ तत एकादश
मौनाः नृपाः ३०० वर्षाणि भुवं भोक्ष्यंति मौनेषु मृतेषु किलकिलायां पुर्यां भूतनंदो वंगिरिः ॥ ३० ॥

शिशुनंदिस्तद्भ्राता यशोनंदिः एते राजानो १०६ षडुत्तरशतवर्षाणि महीं भोक्ष्यंति ॥ ३१ ॥ तेषां भूतनंदवंशीयादीनां यथायथं त्रयोदश पुत्राः बाह्लिकनामानो भविष्यंति । अथ कश्चित्पुष्यमित्रो नृपो भविष्यति । तस्य दुर्मित्रः ॥ ३२ ॥ तथांध्राः सप्त ७ कौशलाः सप्त ७ विदुरपतयो निषधाश्च । एते एककालाः मांडलिकाः राजानो बाह्लिकेभ्य एव भविष्यंति ॥ ३३ ॥ ततो मागधानां राजा विश्वस्फूर्जिनामा भविष्यति । स विप्रादिवर्णान् पुलिंदयदुमद्रकसंज्ञान् म्लेच्छप्रायान् करिष्यति ॥ ३४ ॥ असतीः प्रजाः पालयिष्यति । स क्षत्रमुत्साद्य पद्म

शिशुनंदिश्च तद्भ्राता यशोनंदिः प्रवीरकः ॥ इत्येते वै वर्षशतं भविष्यंत्यधिकानि षट् ॥ ३१ ॥ तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः ॥ पुष्यमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३२ ॥ एककाला इमे भूपा सप्तांध्राः सप्त कौशलाः ॥ विदूरपतयो भाव्या निषधास्तत एव हि ॥ ३३ ॥ मागधानां तु भविता विश्वस्फूर्जिः पुरंजयः ॥ करिष्यत्यपरो वर्णान् पुलिंदयदुमद्रकान् ॥ ३४ ॥ प्रजाश्चब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ॥ वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ अनुगंगामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥ ३५ ॥ सौराष्ट्रावंत्याभीराश्च शूद्रा अर्बुदमालवाः ॥ व्रात्या द्विजा भविष्यंति शूद्रप्राया जनाधिपाः ॥ ३६ ॥ सिंधोस्तटे चंद्रभागां कौंतीं काश्मीरमंडलम् ॥ भोक्ष्यंति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ॥ ३७ ॥ तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः ॥ एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥ ३८ ॥ स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ॥ उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥ ३९ ॥ असंस्कृताः क्रियाहीना रजसा तमसावृताः ॥ प्रजास्ते भक्षयिष्यंति म्लेच्छा राजन्यरूपिणः ॥ ४० ॥

वत्यां नगर्यां वसन् गंगाद्वारमारभ्य प्रयागपर्यंतां भूमिं भोक्ष्यति ॥ ३५ ॥ ततः सौराष्ट्राः आवंत्याः आभीराः शूद्राः अर्बुदाः मालवा एतद्देशवासिनो द्विजाः व्रतहीनाः शूद्रप्रायाः नृपाः भविष्यंति ॥ ३६ ॥ एते सर्वे म्लेच्छप्रायाः नृपाश्च सिंधोस्तटं चन्द्रभागां कौंतीं काश्मीरमण्डलं समकालं भोक्ष्यंति ॥ ३७ ॥ एते सर्वेऽधर्मतत्पराः अल्पदातारस्तीव्रमन्यवः ॥ ३८ ॥ स्त्रीबालगोद्विजघ्नाः परदारधनाऽपहराः अल्पायुषः उदिताऽस्तमितप्रायाः संस्कारहीनाः रजस्तमोव्याप्ताः संतः प्रजाः पीडयिष्यंति ॥ ३९ ॥ ४० ॥

१ वेदाचारशून्याः । २ हर्षशोकादिबहुलाः । ३ गर्भाधानादिसंस्कारशून्याः । ४ धनाद्यपहारादिना पीडयिष्यन्ति ।

तदा तद्देशवासिनो मनुष्याः राजसदृशधर्मपराः अन्योन्यतो राजतश्च क्षयं यास्यंति ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे चूर्णिकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः । अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥ १ ॥ श्रीशुक उवाच ॥ ततो दिनेदिने धर्मः सत्यं शौचं दया क्षमायुर्बलं स्मृतिर्नश्यति॥ १ ॥कलिधर्मानाह । कलौ वित्तमेव नृणां जन्माचारगुणोदयः धर्मन्यायव्यवस्थायां बलमेव कारणम् ॥ २ ॥ दांपत्ये रुचिरेव हेतुः न कुलगोत्रादि । क्रयविक्रयादौ व्यवहारे कापट्यम् । स्त्रीपुंसयोर्यावद्रतिस्तावत्प्रीतिः ।

तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ॥ अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कंधे कलौ भाविनृपान्वय० प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ॥ कालेन बलिना राजन्नंक्ष्यत्यायुर्बलं स्मृतिः ॥ १ ॥ वित्तमेव कलौ नणां जन्माचारगुणोदयः॥धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥ दांपत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ॥ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥३॥ लिंगमेवाश्रमख्यातावन्योऽन्यापत्तिकारणम् ॥ अवृत्त्यां न्यायदौर्बल्यं पांडित्ये चापलं वचः ॥ ४ ॥ अनाढ्यतैवासाधुत्वे साधुत्वे दंभ एव तु ॥ स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥ दूरे वार्ययनं तीर्थं लावण्ये केशधारणम् ॥ उदरंभरिता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥ दाक्ष्यं कुटुम्बभरणं यशोर्थे धर्मसेवनम् ॥ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥ ७ ॥

विप्रत्वे सूत्रधारणम् ॥ ३ ॥ आश्रमाणां ज्ञाने चिह्नमेव कारणं न त्वाचारः । पांडित्ये भाषणं हेतुः ॥ ४ ॥ असाधुत्वेऽनाढ्यता । साधुत्वे दंभः । स्त्रीणां विवाहे स्वीकार एव । स्नानमेवालंकारः ॥ ५ ॥ दूरे यो जलाशयः स एव तीर्थम् । लावण्ये केशधारणम् । उदरभरणमेव पुरुषार्थः । सत्यत्वे धार्ष्ट्यमेव ॥ ६ ॥ कुटुम्बपोषणे दक्षत्वम् । यशोर्थे धर्मसेवनम् । एवं दुष्टप्रजाभिः क्षितिमण्डले व्याप्ते सति ॥ ७ ॥

१ दंडाजिनादिकम् ।२ आश्रमादाश्रमान्तरगमने ।

ब्रह्मविट्क्षत्रशूद्राणां मध्ये यो बली स नृपो भविष्यति । किंच लुब्धैर्निर्लिम्नश्चौर्यधर्मरतैः राजन्यैः ॥ ८ ॥ अपहृतदारद्रविणाःप्रजा गिरिं वनं यास्यंति शाकमूलमांसमधुफलपुष्पबीजभोजनाः ॥ ९ ॥ प्रजाः अनावृष्ट्या दुर्भिक्षकरैः शीतवाताऽऽतपादिभिः ॥ १० ॥ क्षुत्तृड्व्याधिभिः संतापेन चिंतया च पीडिताः सत्यो नंक्ष्यंति । कलौ विंशतिः त्रिंशद्वर्षाणि वा नृणां परमायुः॥११॥एवं कलिदोषतो नृणां क्षीणेषु देहेषु वर्णाश्रमिणां

ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥आच्छिन्नदारद्रविणा यास्यंति गिरिकाननम् ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः॥९॥अनावृष्ट्या विनंक्ष्यंति दुर्भिक्षकरपीडिताः॥ शीतवातातपप्रावृड्हिमैरन्योऽन्यतः प्रजाः ॥ १० ॥ क्षुत्तृड्भ्यां व्याधिभिश्चैव संतापेन च चिंतया ॥ त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥ क्षीयमाणेषु देहेषु देहिनां कलिदोषतः॥वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥ पाषंडप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥ १३॥शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ॥ गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बंधुषु ॥ १४ ॥ अणुप्रायास्वोषधीषु शमीप्रायषु स्थास्नुषु ॥ विद्युत्प्रायषु मेघेषु शून्यप्रायषु सद्मसु ॥ १५ ॥ इत्थं कलौ गतप्राये जने तु खरधर्मणि ॥ धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १६ ॥ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणाय साधूनां जन्मकर्मापनुत्तये ॥ १७ ॥ शंभलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ॥ भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥१८ ॥

वेदमार्गे च नष्टे ॥ १२ ॥ पाषंडप्राय धर्मे चौरप्रायेषु राजसु चौर्याऽनृतहिंसादिप्रायेषु नृषु ॥ १३ ॥शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु गृहप्रायेषु आश्रमेषु यौनप्रायेषु बधुषु॥१४॥अणुप्रायास्वोषधीषु शमीप्रायेषु वृक्षेषु विद्युत्प्रायेषु मेघेषु धर्महीनेषु गृहेषु सत्सु॥१५॥इत्थं कलौ समाप्तप्राये धर्मरक्षणाय सत्त्वगुणेन भगवान ॥१६॥ साधूनां मोक्षाय शंभलग्रामे मुख्यस्य विष्णुयशसो द्विजस्य गृहे कल्किः प्रादुर्भविष्यति ॥१७॥ १८॥

१ प्रमाणतः क्षोरतश्चाजाश्वदशोषु । २ योनितः संबद्धाः स्यालादयस्तत्प्रायेषु । ३ श्यामाकतुल्यासु । ४ वृक्षेषु ।

स शीघ्रगं देवदत्तमश्वमारुह्य भूमौ विचरन् खड्गेन राजवेषगुप्तान् दस्यून् कोटिशो हनिष्यति ॥१९॥२०॥ तदा वासुदेवस्यांगचंदनसुगंधवायुस्प
र्शेन सर्वेषां मनांसि स्वच्छानि भविष्यंति ॥२१॥ वासुदेवे हृदि स्थिते सति प्रजोत्पत्तिविशेषाः भविष्यंति ॥ २२ ॥ यदा कल्किर्हरिर्भविता
तदा कृतयुगं सात्त्विकी प्रजोत्पत्तिश्च भविष्यति ॥२३॥ किं च यदा चंद्रसूर्यबृहस्पतीनां पुष्यनक्षत्रे समकाल एव प्रवेशस्तदैव कृतयुगप्रवृत्तिः
स्यात् ॥२४॥ हे राजन् ! ये गताः वर्तमाना भविष्यतो नृपास्ते सोमसूर्यवंशीयाः संक्षेपतः कथिताः ॥२५॥ तव जन्मारभ्य नंदाभिषेकावधि

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ॥ असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥१९॥ विचरन्नाशुना क्षोण्यां हयेना
प्रतिमद्युतिः ॥ नृपलिंगच्छदो दस्यून्कोटिशो निहनिष्यति ॥ २० ॥ अथ तेषां भविष्यंति मनांसि विशदानि वै ॥
वासुदेवांगरागातिपुण्यगंधानिलस्पृशाम् ॥ पौरजानपदानां वै हतेष्वखिलदस्युषु ॥२१॥ तेषां प्रजाविसर्गश्च स्थविष्ठः
संभविष्यति ॥ वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥ २२ ॥ यदाऽवतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः ॥ कृतं
भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥ २३॥ यदा चंद्रश्च सूर्यश्च तथा तिष्यबृहस्पती ॥ एकराशौ समेष्यंति तदा
भवति तत्कृतम् ॥२४॥ येऽतीता वर्तमाना ये भविष्यंति च पार्थिवाः ॥ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः
॥२५॥ आरभ्य भवतो जन्म यावन्नंदाऽभिषेचनम् ॥ एतद्वर्षसहस्रं तु शतं पंचदशोत्तरम् ॥ २६ ॥ सप्तर्षीणां तु यौ
पूर्वौ दृश्येते उदितौ दिवि ॥ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ २७ ॥ तेनैत ऋषयो युक्तास्तिष्ठंत्यब्द
शतानि च ॥ ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥ २८ ॥ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं
गतः ॥ तदाऽविशत्कलिर्लोकं पापे यद्रमते जनः ॥ २९ ॥

द्वाभ्यां न्यूनानि पंचदश शतानि १४९८ वर्षाणि भवंति ॥ २६॥ हे राजन् ! सप्तर्षीणां मध्ये यौ पुलहक्रतुसंज्ञावुदयसमये प्रथममुदितौ दृश्येते
तयोर्मध्ये यद् निशि नक्षत्रं दृश्यते ॥ २७ ॥ तेनैव युक्ताः सप्तर्षयः एकस्मिन्नेकस्मिन् ऋक्षे नृणां शतंशतं समास्तिष्ठंति । तेऽधुना मघासु
विचरंति॥२८॥ यदा कृष्णो वैकुण्ठं गतस्तदा कलिर्लोकमाविशत् । यस्मिन् युगे जनः पापे रमते ॥ २९ ॥

यावद् भगवान् जिजीवं तावत् कलिः स्वबलं कर्तुं नाशकत्॥३०॥ किं च हे राजन् ! यदा सप्तर्षयो मघासु विचरंति तदा द्वादशाब्दशतात्मकः कलिः प्रवृत्तः ॥३१॥ यदा च मघाभ्यः पूर्वाषाढायां यास्यंति तदा कलिर्वृद्धिं प्राप्स्यति॥ ३२॥ किं च यस्मिन् दिने श्रीकृष्णो वैकुंठं यात स्तदैव प्रविष्टः कलिरिति पुराविदः प्राहुः ॥ ३३ ॥ दिव्यसहस्रवर्षात्मके काले गते सति पुनः कृतं भविष्यति। तदा मनः आत्मप्रकाशकं



यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ॥ तावत्कलिर्वै पृथिवीं पराक्रांतुं न चाशकत ॥३० ॥ यदा देवर्षयः सप्त मघासु विचरंति हि ॥ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥३१॥ यदा मघाभ्यो यास्यंति पूर्वाषाढां महर्षयः॥ तदा नंदात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥३२ ॥ यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि ॥ प्रतिपन्नं कलि युगमिति प्राहुः पुराविदः ॥३३॥ दिव्याब्दानां सहस्रांते चतुर्थे तु पुनः कृतम् ॥ भविष्यति यदा नृणां मन आत्म प्रकाशकम् ॥३४॥ इत्येष मानवो वंशो यथा संख्यायते भुवि ॥ तथा विट्छूद्रविप्राणां तास्ता ज्ञेया युगेयुगे ॥ ३५ ॥ एतेषां नामलिंगानां पुरुषाणां महात्मनाम् ॥ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥३६॥देवापिः शंतनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ॥ कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥ ताविहैत्य कलेरंते वासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः॥ ३८ ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥३९॥ राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे ॥ भूमौ ममत्वं कृत्वांते हित्वेमां निधनं गताः ॥ ४०॥

स्यात् ॥३४॥ एवं मानवो वंशस्तथा विट्छूद्रविप्राणां च वंशः कथितः ॥३५॥ एतेषां पुरुषाणां महात्मनां कीर्त्तिरेव भुवि स्थिता ॥ ३६ ॥ किं च शंतनोर्भ्राता देवापिरिक्ष्वाकुवंशजो मरुश्च कलापग्रामे आसाते॥३७॥ तौ वासुदेवानुशिक्षया कलेरंते इहाऽऽगत्य धर्मं विस्तारयतः॥३८॥ एवं क्रमेण सत्यादिकं चतुर्युगं भुवि प्राणिषु वर्तते॥३९॥हे राजन् ! ये मया प्रोक्ताः नृपाः अपरे च ते सर्वे भूमौ ममतां कृत्वा नाशं गताः॥४०॥



१ नामैव प्रकाशकं येषाम्।

किं च नृपस्यापि देहस्यांते कृमिविड्भस्मान्यतमसंज्ञा भविष्यति। अतो देहस्यार्थं यो भूतेभ्यो द्रुह्यति तस्य निरयो भवति ॥ ४१ ॥ इयं भूर्मत्पूर्वजैर्धृतेदानीं मत्पुत्रपौत्रजनस्यार्थे यास्यत्येवं ये विदंति ॥ ४२ ॥ तेऽज्ञाः अंते महीं शरीरं च हित्वा निधनं गताः ॥ ४३ ॥ येये भूपतयस्तेजसा भुवं भुंजति ते सर्वे कालेन कथामात्राऽवशेषिताः कृताः ॥ ४४ ॥ इति श्रीभा० द्वा० चू० द्वितीयोऽध्यायः ॥२॥ तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते ॥ कलौ च दोषभूयिष्ठे दोषहंत्री हरेर्नुतिः ॥ १ ॥ श्रीशुक उवाच ॥ अथ स्वस्य जये उद्युक्तान् नृपान् दृष्ट्वेयं भूर्हसति।

कृमिविड्भस्मसंज्ञाऽन्ते राजनाम्नोऽपि[1] यस्य च॥भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः॥४१॥कथं सेयमखंडा भूः पूर्वैर्मे पुरुषैर्धृता ॥ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य वा॥४२॥तेजोऽबन्नमयं कायं गृहीत्वात्मतयाऽबुधाः॥ महीं ममतया चोभौ हित्वांतेऽदर्शनं गताः॥४३॥येये भूपतयो राजन्भुंजंति भुवमोजसा॥कालेन ते कृताः सर्वे कथा मात्राः कथासु च॥४४॥इति श्रीभा०म०द्वा०कल्क्यवतारादि०द्वितीयोऽध्यायः॥२॥श्रीशुक उवाच॥दृष्ट्वाऽऽत्मनि जये व्यग्रान्नृपान्हसति भूरियम् ॥अहो मां विजिगीषंति मृत्योः क्रीडनका नृपाः॥१॥काम एष नरेंद्राणां मोघः स्याद्विदुषामपि ॥ येन फेनोपमे पिंडे येऽतिविश्रंभिता नृपाः ॥२॥पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमंत्रिणः ॥ ततः सचिवपौराप्तकरींद्रान्[2]अस्य कंटकान् ॥ ३ ॥ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ॥ इत्याशाबद्धहृदया न पश्यंत्यंतिकेऽन्तकम् ॥४॥ समुद्रावरणां जित्वा मां विशंत्यब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥

अहो एते मृत्योः क्रीडनकाः नृपाः मां विजिगीषंते ॥ १ ॥ येन कामेन फेनोपमे देहे विश्वस्ता ये नृपास्तेषामेष कामो निष्फल एव स्यात् ॥ ॥ २ ॥ तमेवमाह। पूर्वमिंद्रियषड्वर्गं निर्जित्य राजमंत्रिणो वशीकरिष्यामस्ततः प्रधानपौरादीन् जित्वा पृथ्वीं जेष्यामः ॥३ ॥इत्याशाबद्धहृदयाः समीपे प्राप्तं कालं न पश्यंति ॥ ४ ॥ एवं केचित्पुनर्मां जित्वाऽतितृष्णयाऽब्धिं विशंति ॥ ५ ॥

१ राजेति नाम यस्य तस्य। २ करींद्राः हस्तिपकाः।

यां मां विसृज्य मनवस्तत्सुताश्च गतास्तां मां मूढाः नृपाः जेष्यंति किम् ॥ ६॥ मत्कृते पितृपुत्राणां भ्रातॄणां च विग्रहो भवति ॥ ७ ॥ किंच इयं मही ममैव न तवेतिवादिनो नृपाः मिथो घ्नंति म्रियंते च॥८॥ अहो पृथुः पुरूरवाः गाधिर्नहुषो भरतोऽर्जुनो मांधाता सगरो रामः खट्वांगो धुंधुमारो रघुः॥९॥ तृणबिंदुर्ययातिः शंतनुः शर्यातिर्गयो भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः॥१०॥हिरण्यकशिपुर्वृत्रो रावणो नमुचिः

यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ॥ गता यथागतं युद्धे तां मां जेष्यंत्यबुद्धयः ॥ ६ ॥ मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः ॥ जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥ ७ ॥ ममैवेयं मही कृत्स्ना न ते मूढेतिवादिनः ॥ स्पर्धमाना मिथो घ्नंति म्रियंते मत्कृते नृपाः ॥ ८ ॥ पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः ॥ मांधाता सगरो रामः खट्वांगो धुंधुहा रघुः ॥ ९ ॥ तृणबिंदुर्ययातिश्च शर्यातिः शंतनुर्गयः ॥ भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥ १० ॥ हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ॥ नमुचिः शंबरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥ अन्ये च बहवो दैत्या राजानो ये महेश्वराः ॥ सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥ ममतां मय्यवर्तंत कृत्वोच्चैर्मर्त्यधर्मिणः ॥ कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥ १३ ॥ कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ॥ विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥ १४ ॥ यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममंगलघ्नः ॥ तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः॥१५॥ ॥ राजोवाच ॥ केनोपायेन भगवन् कलेर्दोषान्कलौ जनाः ॥ विधमिष्यंत्युपचितांस्तन्मे ब्रूहि यथा मुने ॥ १६ ॥

शंबरो भौमो हिरण्याक्षस्तारकः॥११॥एतेऽन्ये च सर्वविदः शूराः सर्वजितः॥१२॥ते मयि ममतां कृत्वावर्त्तंत ते सर्वे कालेन कथावशेषाःकृताः॥१३॥ हे राजन् !येषां कथाः ज्ञानवैराग्यं ज्ञातुमिच्छया तुभ्यं कथिताः एता वाग्विलासमात्ररूपाः न तु परमार्थकथनम्॥१४॥अतः कृष्णे भक्तिमिच्छुः पुरुषस्तद्गुणानुवादं नित्यं शृणुयात ॥१५ ॥ राजोवाच ॥ हे भगवन् ! जनाः कलिदोषान् केनोपायेन नाशयिष्यंति तद् ब्रूहि ॥ १६ ॥

१ मृतानाम् । २ विज्ञानं विषयासारताज्ञानं ततो वैराग्यं तयोर्विवक्षया ।

तथा युगानि तद्धर्मान् प्रलयकल्पयोर्मानं च वद ॥ १७ ॥ श्रीशुक उवाच ॥ कृतयुगे धर्मः सत्यं दया तपो दानमिति चतुष्पाद्वर्तते ॥१८ ॥ तत्र जनाः संतुष्टा दयायुक्ताः शांताः आत्मारामाः समदृशो भवंति ॥ १९ ॥त्रेतायां धर्मस्य पादानां तुर्यांशोऽनृतहिंसाऽसन्तोषद्वेषरूपैरधर्मपादैः शनैर्ह्रीयते ॥ २० ॥ तदा क्रियातपोनिष्ठाः नातिहिंस्राः न लंपटाः ब्राह्मणाधिकाः प्रजा भवंति ॥ २१ ॥ अथ द्वापरे हिंसाऽनृतासन्तोषद्वेषैरधर्म

युगानि युगधर्मांश्च मानं प्रलयकल्पयोः ॥ कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥१७ ॥ श्रीशुक उवाच ॥कृते प्रवर्त्तते धर्मश्चतुष्पात्तैर्जनैर्धृतः ॥ सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥ संतुष्टाः करुणा मैत्राः शांता दांतास्तितिक्षवः ॥ आत्मारामाः समदृशः प्रायशः श्रमणा जनाः॥१९॥ त्रेतायां धर्मपादानां तुर्यांशो क्षीयते शनैः ॥ अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः ॥ २० ॥ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लंपटाः॥ त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥ तपः सत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ ॥ २२ ॥ यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः ॥ आढ्याः कुटुंबिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥२३॥ कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ॥ एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनंक्ष्यति ॥२४ ॥ तस्मिँल्लुब्धा दुराचारा निर्दया शुष्कवैरिणः ॥ दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥ सत्त्वं रजस्तम इति दृश्यंत पुरुषे गुणाः ॥ कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥

लक्षणैर्धर्मस्य द्वौ पादौ ह्रसतः ॥ २२ ॥ तत्र जनाः यशस्विनः वेदाध्ययने रताः हृष्टाः आढ्याः क्षत्रियब्राह्मणप्रधानाः अभवन् ॥ २३॥कलौ तु धर्मस्य पादानां चतुर्थांशो दार्शिष्यते सोऽपि नंक्ष्यति ॥ २४ ॥ तदा प्रजाः लुब्धाः दुराचाराःनिर्दयाः शुष्कवैरिण्यो दुर्भगाः अतितृष्णाः शूद्रभिक्षादिप्रधानाः भविष्यंति ॥ २५ ॥ एवं युगवैषम्ये हेतुमाह । ये सत्त्वादिगुणाः पुरुषे दृश्यंते ते कालप्रेरिता आत्मनि वर्तन्ते ॥ २६ ॥

१ आत्माभासवन्तः । २ ब्राह्मणाधिकाः । ३ यशःप्रियाः । ४ सत्त्वमित्यादिभिः पञ्चभिः श्लोकैः युगानां वैषम्ये कारणमाह ।

यदा मनोबुद्धींद्रियाणि सत्त्वगुणे वर्तन्ते ज्ञाने तपसि रुचिश्च तदा कृतयुगं प्रवृत्तं विद्यात् ॥२७॥ यदा च काम्यकर्मसु नृणां प्रीतिस्तदा राजसं त्रेतायुगं विद्यात् ॥ २८ ॥ यदा लोभोऽसन्तोषः काम्यकर्मसु प्रीतिश्च तदा रजस्तमः प्रधानं द्वापरं जानीहि ॥ २९ ॥ यदा मायानृतमालस्यं निद्रा हिंसा दुःखं शोको मोहो भयं दीनत्वं तदा तामसः कलिर्ज्ञातव्यः ॥ ३० ॥ अथ कलिदोषानाह । यद्धेतोर्मर्त्या क्षुद्रभाग्याः मंदमतयो बह्वाहाराः निर्द्रव्याः स्त्रियश्च पुंश्चल्यो भविष्यंति॥३१॥ चौराधिका देशाः पाषण्डदूषिता वेदाः प्रजाभक्षका नृपा शिश्नोदरपरा द्विजाः॥३२॥

प्रभवंति यदा सत्त्वे मनोबुद्धींद्रियाणि च ॥ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः ॥ २७ ॥यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम् ॥ तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ॥२८॥ यदा लोभस्त्वसंतोषो मानो दंभोऽथ मत्सरः । कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २९॥ यदा मायानृत तंद्रा निद्रा हिंसाविषादनम् ॥ शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः॥३०॥यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः॥कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥ दस्यूत्कृष्टा[1] जनपदा वेदाः पाषण्डदूषिताः ॥ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥ अव्रता बटवोऽशौचा भिक्षवश्च कुटुंबिनः ॥ तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः ॥ ३३ ॥ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः॥ ३४॥पणयिष्यन्ति वै क्षुद्राः किराटाः[2] कूटकारिणः ॥ अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम् ॥३५॥ पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ॥ भृत्यं विपन्नं पतयः कौलं[3] गाश्चापयस्विनीः ॥ ३६ ॥

ब्रह्मचारिणो योग्याचारशून्या गृहस्था भिक्षाटनपरास्तपस्विनो ग्रामवासाः यतयो द्रव्यलोलुपाः भविष्यंति ॥ ३३ ॥ किंच स्त्रियो लघुदेहा बह्वाहाराः बहुप्रजा गतलज्जाः कटुभाषिण्यश्चौर्यमायोरुसाहसयुताः भविष्यंति ॥ ३४॥ नीचवैश्यव्यवहारं वर्तयिष्यंति । अनापद्यपि निंद्यवृत्तिं साधु मंस्यंते ॥ ३५ ॥ भृत्याः निर्द्रव्यं पतिं त्यक्ष्यंति । स्वामिनश्च रोगव्याप्तं भृत्यं त्यक्ष्यंति। दोग्धारोऽदोहाः गास्त्यक्ष्यंति ॥ ३६ ॥

---

१ दस्यवः उत्कृष्टाः प्रचुराः येषु ते । २ वणिजः । ३ कुलपरम्परायातम् ।

पितृभ्रात्रादीन् हित्वा स्त्रीलंपटाः नराः भार्याभगिनीभिर्भार्याभ्रातृभिश्च सह विचारं करिष्यंति ॥ ३७ ॥ शूद्रास्तपस्विवेषेण प्रतिग्रहं करिष्यंति । अधर्मज्ञाः उच्चासनम् आरुह्य धर्मं वक्ष्यंति ॥ ३८ ॥ कलावन्नहीने भूतले सत्यनावृष्ट्या भयातुराः नित्यं समुद्विग्नमनसः ॥ ३९॥ स्नानपानशयनवस्त्रभूषणान्नैः रहिताः पिशाचसदृशाः प्रजाः भविष्यंति ॥ ४० ॥किंच कलौ विंशतिवराटकमात्रेऽप्यर्थे वैरं कृत्वा त्यक्तसौहृदाः प्राणान् त्यक्ष्यंति ॥ ४१ ॥ पुत्राः वृद्धमातापितरौ न रक्षिष्यंति। पितरोऽपि कुशलान् पुत्रान् न रक्षिष्यंति ॥ ४२ ॥ हे राजन् ! कलौ पाषंड

पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः ॥ ननांदृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥ ३७ ॥ शूद्राः प्रति ग्रहीष्यंति तपोवेषोपजीविनः ॥ धर्मं वक्ष्यंत्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥ नित्यमुद्विग्नमनसो दुर्भिक्षकर पीडिताः ॥ निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥ वासोऽन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाः पिशाच संदर्शा भविष्यंति कलौ प्रजाः ॥४० ॥ कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः॥त्यक्ष्यंति च प्रियान् प्राणान् हनिष्यंति स्वकानपि ॥ ४१ ॥ न रक्षिष्यंति मनुजाः स्थविरौ पितरावपि ॥ पुत्रान्सर्वार्थकुशलान् क्षुद्राः शिश्नोदरं भराः ॥ ४२ ॥ कलौ न राजञ्जगतां परं गुरुं त्रैलोक्यनाथानतपादपंकजम् ॥ प्रायेण मर्त्या भगवंतमच्युतं यक्ष्यंति पाषंडविभिन्नचेतसः ॥ ४३ ॥ यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन्वा विवशो गृणन् पुमान् ॥ विमुक्तकर्मा र्गल उत्तमां गतिं प्राप्नोति यक्ष्यंति न तं कलौ जनाः ॥ ४४ ॥ पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसंभवान् ॥ सर्वा न्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ ४५ ॥ श्रुतः संकीर्त्तितो ध्यातः पूजितश्चादृतोऽपि वा ॥ नृणां धुनोति भग वान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥

विभिन्नचेतसो मनुष्या बहुधा जगद्गुरुमच्युतं न यक्ष्यंति ॥ ४३ ॥ अहो म्रियमाणः आतुरो विवशः पतन् यन्नाम गृणन् विमुक्तकर्मबंधनः सन् परमां गतिं प्राप्नोति तं जनाः न यक्ष्यंति ॥ ४४ ॥ अथ कलिदोषनाशोपायमाह । पुंसां चित्तस्थो भगवान् कलिकृतदोषान्हरति ॥ ४५ ॥ किंच श्रुतः कीर्त्तितो ध्यातः पूजितः आदृतोऽपि वा भगवान् नृणां जन्मायुतपापं दूरीकरोति ॥ ४६ ॥

यथा सुवर्णे स्थितोऽग्निस्ताम्रादिधातुजं दुर्वर्णं हंति तथाऽऽत्मगतो विष्णुर्योगिनामशुभांतःकरणं हंति ॥ ४७ ॥ अपि च भगवति हृदि स्थिते सत्यंतरात्मा यथा शुद्धिं लभते तथा विद्यातपःप्राणायामतीर्थयात्राव्रतादिभिर्न ॥ ४८ ॥ हे राजन् ! तस्मात् केशवं हृदिस्थं कुरु । ततः परां गतिं यास्यसि ॥ ४९ ॥ ५० ॥ किंच हे नृप ! दोषनिधेः कलेरेको महान् गुणोऽस्ति । कृष्णस्य कीर्त्तनादेव मुक्तबंधः सन् परं पदं व्रजेत् ॥ ५१ ॥ किंच कृते विष्णोर्ध्यानतो यल्लभ्यते त्रेतायां यज्ञैर्द्वापरे हरिपूजया तत्फलं कलौ हरिकीर्त्तनाल्लभ्यते ॥ ५२ ॥ इति श्रीभा०

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हंति धातुजम् ॥ एवमात्मगतो विष्णुर्योगिनामशुभाशुभम् ॥४७॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ॥ नात्यंतशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनंते॥४८॥ तस्मात्सर्वात्मना राजन्हृदिस्थं कुरु केशवम् ॥ म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥४९॥ म्रियमाणैरभिध्येयो भगवान्परमेश्वरः ॥ आत्मभावं नयत्यंग सर्वात्मा सर्वसंश्रयः ॥ ५० ॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ॥ कीर्त्तनादेव कृष्णस्य मुक्तसंगः परं व्रजेत् ॥ ५१ ॥ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः॥द्वापरे परिचर्यायां कलौ तद्धरिकीर्त्तनात् ॥ ५२ ॥ इति श्रीभा०महा० द्वादश० कलिदोषादिव०तृतीयोऽध्यायः॥३॥श्रीशुकउवाच॥ कालस्ते परमाण्वादिर्द्विपरार्द्धावधिर्नृप ॥ कथितो युगमानं च शृणु कल्पलयावपि ॥ १॥ चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते ॥ स कल्पो यत्र मनवश्चतुर्दश विशांपते॥२॥ तदंते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता ॥ त्रयो लोका इमे तत्र कल्पंते प्रलयाय हि ॥ ३ ॥ एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ॥ शेतेऽनंतासनो विश्वमात्मसात्कृत्य चात्मभूः ॥ ४ ॥

द्वादशस्कंधे चू० तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः ॥ यत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ १ ॥ श्रीशुक उवाच ॥ हे नृप ! परमाण्वादिद्विपरार्द्धांतः कालस्ते कथितः युगमानं च कथितम् । अथ कल्पलयौ शृणु ॥ १ ॥ चतुर्युगसहस्रं ब्रह्मणो दिनं स कल्पः । यत्र चतुर्दश मनवो भवंति ॥ २ ॥ ब्रह्मणो दिनांते तावान् प्रलयः । सा ब्राह्मी रात्रिः । यत्र त्रयो लोकाः प्रलयाय कल्पंत ॥ ॥ ३ ॥ एष नैमित्तिकः प्रलयः प्रोक्तः । यत्र शेषासनो नारायणो विश्वं संहृत्य शेते ब्रह्मा च तस्मिन् शेते ॥ ४ ॥

अथ प्राकृतिकं लयमाह । ब्रह्मणः शतवर्षात्मके आयुषि गते सति महदहंकारपंचतन्मात्ररूपाः सप्त प्रकृतयः प्रलयाय कल्पंते ॥ ५ ॥ एष प्राकृतिकः प्रलयो यत्रांडकोशो लीयते ॥ ६ ॥ तदा पर्जन्यः शतवर्षाणि भूमौ न वर्षति । तेन निरन्ने सति क्षुधार्दिताः प्रजाः अन्योन्यं भक्ष्यमाणाः सत्यः क्षयं यास्यंति ॥ ७ ॥ ततः प्रलयकालीनः सूर्यः सामुद्रं दैहिकं भौमं सर्वं रसं रश्मिभिराकर्षति नैव मुञ्चति ॥८॥ ततः संकर्षण

द्विपरार्द्धे त्वतिक्रांते ब्रह्मणः परमेष्ठिनः ॥ तदा प्रकृतयः सप्त कल्पंते प्रलयाय वै ॥ ५ ॥ एष प्राकृतिको राजन् प्रलयो यत्र लीयते ॥ आंडकोशस्तु संघातो विघात उपसादिते ॥ ६ ॥ पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति ॥ तदा निरन्ने ह्यन्योन्यं भक्ष्यमाणाः क्षुधार्दिताः ॥ क्षयं यास्यंति शनकैः कालेनोपद्रुताः प्रजाः ॥ ७ ॥ सामुद्रं दैहिकं भौमं रसं सांवर्त्तको रविः ॥ रश्मिभिः पिबते घोरैःसर्वं नैव विमुञ्चति॥८॥ततः संवर्त्तको वह्निः संकर्षणमुखोत्थितः॥ दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥ ९ ॥ उपर्यधः समंताच्च शिखाभिर्वह्निसूर्ययोः ॥ दह्यमानं विभात्यंडं दग्धगोमयपिंडवत् ॥ १० ॥ ततः प्रचंडपवनो वर्षाणामधिकं शतम् ॥ परः संवर्तको वाति धूम्रं खं रजसा वृतम् ॥ ११ ॥ ततो मेघकुलान्यंग चित्रवर्णान्यनेकशः ॥ शतं वर्षाणि वर्षंति नदंति रभसस्वनैः ॥ १२॥ तदाभूमेर्गंधगुणं ग्रसंत्याप उदप्लवे॥ ग्रस्तगंधा तु पृथिवी प्रलयत्वाय कल्पते ॥ १३ ॥ अपां रसमथो तेजस्ता लीयंतेऽथ नीरसाः ॥ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १४ ॥

मुखोत्पन्नोऽग्निर्भूविवरान्दहति ॥ ९ ॥ तदोपर्यधोऽग्निसूर्ययोर्ज्वालाभिर्दह्यमानं ब्रह्मांडं विभाति दग्धगोमयपिंडवत्॥ १०॥ततः प्रचंडो वायुर्वर्षाणामधिकं शतं वाति । तदा रजसा व्याप्तं खं धूम्रं भवति ॥११॥ ततो मेघकुलानि वर्षशतं वर्षंति । ततः एकोदकं ब्रह्मांडं भवति ॥ १२ ॥ तदा च भूमेर्गंधगुणमापो ग्रसंति । नष्टगंधा भूर्नश्यति ॥ १३ ॥ ततस्तेजोऽपां रसं ग्रसते । ताः आपस्तेजसि लीयंत । वायुस्तैजसो रूपं ग्रसते॥ १४ ॥

१ प्रकृतीनां तत्कार्याण्डकोशस्य च प्रलयात्प्राकृतिकः । २ विघातकारणे । ३कालप्रापिते ।

तत्तेजो वायौ लीयते । वायोर्गुणं स्पर्शं ख ग्रसते । स वायुराकाशे लीयते ॥ १५ ॥ खस्य शब्दगुणं तामसाहंकारो ग्रसते । सात्त्विकाहंकारो देवान् ग्रसते । राजसाहंकारः इंद्रियाणि ग्रसते ॥ १६ ॥ महत्तत्त्वमहंकारं ग्रसते । महत्तत्त्वं त्रयो गुणाः ग्रसंते । गुणान् प्रधानतत्त्वंग्रसते । सैव प्रकृतिः ॥ १७ ॥ प्रधानतत्त्वस्य तु लयो नास्ति । तस्माद्यंतहीनमव्यक्तमव्ययं वदंति ॥ १८ ॥यत्र वाचो मनस्त्रिगुणाः महत्तत्त्वादयश्च न ॥१९॥

लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ स वै विशति खं राजंस्ततश्च नभसो गुणम् ॥ १५ ॥ शब्दं ग्रसति भूतादिर्नभस्तमनु लीयते ॥ तैजसश्चेंद्रियाण्यंग देवान्वैकारिको गुणैः॥१६ ॥ महान्ग्रसत्यहंकारं गुणाः सत्त्वादयश्च तम ॥ ग्रसतेऽव्याकृतं राजन् गुणान् कालेन चोदितम् ॥ १७ ॥ न तस्य कालावयवैः परिणामादयो गुणाः ॥ अनाद्यनंतमव्यक्तं नित्यं कारणमव्ययम् ॥ १८ ॥ न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी॥ न प्राणबुद्धींद्रियदेवता वा न सन्निवेशः खलु लोककल्पः॥१९॥न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ॥ संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनंति ॥ २० ॥ लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ॥ शक्तयः संप्रलीयंते विवशाः कालविद्रुताः ॥२१ ॥ बुद्धींद्रियार्थरूपेण ज्ञानं भाति तदाश्रयम्॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यंतवदवस्तु यत् ॥२२॥ दीपश्चक्षुश्च रूपं च ज्योतिषोनपृथग्भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात्॥२३॥

किंच जाग्रदाद्यवस्थाः पंच तत्त्वानि च एतादृशं तन्मूलभूतं पदं कथयंति ॥ २० ॥ एष प्राकृतिको लयः यत्र सर्वशक्तयः प्रलीयंते ॥ २१ ॥ आत्यंतिकप्रलयमाह । आत्यंतिकलयो मोक्ष इत्युच्यते । स च ब्रह्मज्ञानेन सर्वप्रपंचलयात्मको बुद्धींद्रियार्थरूपेण तदाश्रयं ज्ञानं भाति॥ २२ ॥ दीपश्चक्षुः रूपं च तेजसः पृथक् न । एवं धीरिंद्रियाणि विषयाश्च ब्रह्मणः पृथक् न स्युः ॥ २३ ॥

१ ग्राहककरणग्राह्यरूपाणां बुद्ध्यादीनामाश्रयभूतम् । २ ज्ञानात्पृथक्त्वे हेतुः दृश्यत्वं कारणाव्यतिरेकादाद्यंतवत्त्वं रज्जुसर्पादिवत् । ३ व्यतिरेकं प्रपंचयति दीपश्चेति ।

हे राजन् । जागरणाद्यवस्थाः बुद्धेरुच्यंते । प्रतिदेहं ममाहमिति नानात्वं मायामात्रम् ॥ २४ ॥ किंच यथाऽऽकाशे मेघाः भवंति न भवंति तथा ब्रह्मणि विश्वमाद्यन्तवत्त्वादवयवी भवति॥ २५ ॥ सर्वान्वयविनामवयवः सत्यं प्रोक्तोऽवयविनं विना पृथगेवावयवाः प्रतीयेरन् । यथा वस्त्रस्यावयवास्तंतवो वस्त्रात्पृथक्प्रतीयंते ॥ २६ ॥ कारणकार्याभ्यां यल्लभ्येत स भ्रमः ॥ २७ ॥ प्रकाशमानोऽपि प्रपंचः प्रत्यगात्मप्रकाशं विना

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि॥ २४॥यथा जलधरा व्योम्नि भवंति न भवंति च ॥ ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥ २५ ॥ सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह ॥ विनार्थेन प्रतीयेरन्पटस्येवांग तंतवः॥ २६ ॥ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ॥ अन्योन्यापाश्रयात्सर्वमाद्यंतवदवस्तु यत् ॥ २७ ॥ विकारः ख्यायमानोऽपि प्रत्यगात्मानमंतरा ॥ न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥२८॥ न हि सत्यस्य नानात्वमविद्वान्यदि मन्यते ॥ नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥२९॥ यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ॥एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ ३० ॥ यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ॥ एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबंधनः ॥ ३१ ॥

न निरूपितोऽस्ति ॥ २८॥ सत्यस्य नानात्वं न । अज्ञानी यदि नानात्वं मन्यते तर्हि घटाकाशमहाकाशयोरिव भवति ॥ २९ ॥ यथा सुवर्णं व्यवहारमार्गेषु कटककुण्डलादिरूपेण प्रतीयते तथा भगवाँल्लौकिकवैदिकैर्वचोभिर्जनैर्व्याख्यायते ॥ ३० ॥ यथा सूर्यप्रभवो मेघस्तेनैव प्रकाशितश्च नेत्रस्यार्कदर्शप्रतिबन्धको भवति एवमहंकारो ब्रह्मकार्यभूतस्तेनैव प्रकाशितश्च जीवस्य ब्रह्मरूपदर्शनप्रतिबन्धको भवति ॥ ३१ ॥

---

१ आद्यन्तवत्त्वादित्यस्यासिद्धिमाशंक्य सावयवत्वेन साधयति । सत्यमिति । यत्सावयवं तदाद्यन्तवदित्यर्थः । २ प्रतिज्ञातं कारणसत्यत्वं प्रतिपादयति । अवयविनाशेऽप्यवयवाः प्रतीयन्ते इत्यर्थः । ३ प्रकाशमानोऽपि ।

अहंकारनाशे स्वरूपदर्शनं भवति तत्राह। घनो यदा विदीर्यते तदा चक्षुः रविमीक्षते । यदाऽऽत्मनोऽहंकारो नश्यति तदा ब्रह्माहमिति पश्यति ॥ ३२ ॥ हे राजन् ! एतेन ज्ञानशस्त्रेणाहंकारबन्धनं छित्त्वा यदाऽच्युतात्मानुभवोऽवतिष्ठते तमात्यंतिकं लयमाहुः ॥३३॥ अथ नित्यलयमाह । हे नृप ! ब्रह्मादिसर्वभूतानामुत्पत्तिप्रलयौ नित्यं सूक्ष्मज्ञाः प्रचक्षते ॥ ३४ ॥ कुतः इत्यत आह । कालरूपस्रोतसो वेगेन नदीप्रवाहदीपज्वालादीनां याः उच्चनीचावस्थास्ताः यथा स्पष्टतया न दृश्यंते तद्वद्देहादेर्जन्मलयौ न दृश्येते ॥ ३५ ॥ ईश्वरमूर्तिना कालेन जन्माद्यवस्थाः नैव

घनो यदाऽर्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा॥यदा ह्यहंकार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥३२ ॥ यदैवमेतेन विवेकहेतिना मायामयाहंकरणात्मबंधनम् ॥ छित्त्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यंतिकमंग संप्लवम् ॥३३॥ नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप॥उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥३४॥ कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ॥ परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥ ३५ ॥ अनाद्यंतवताऽनेन कालेनेश्वरमूर्तिना ॥ अवस्था नैव दृश्यंते वियति ज्योतिषामिव ॥ ३६ ॥ नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ॥ आत्यंतिकश्च कथितःकालस्य गतिरीदृशी ॥३७॥ एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः॥ लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३८ ॥ संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमंतरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥३९॥ पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ॥ नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४० ॥

दृश्यंते आकाशे गच्छतां चन्द्रादीनामिव ॥ ३६ ॥ एवं नित्यो नैमित्तिकः प्राकृतिकः आत्यंतिकः इति चतुर्विधो लयस्ते कथितः ॥ ३७ ॥ हे राजन् ! नारायणस्य लीलाकथाः संक्षेपेण ते कथिताः संपूर्णं वक्तुं ब्रह्माऽपि न समर्थः ॥३८ ॥ किं च संसारसिन्धुं तर्तुमिच्छोः पुंसो हरिलीलाकथारससेवनं विनाऽन्या नौका न ॥ ३९ ॥ हे नृप ! एतां संहितामृषिर्नारायणो नारदाय प्राह स व्यासाय ॥ ४० ॥

व्यासः इमां वेदसंमितां संहितां प्रीतो मह्यं प्राद ॥ ४१ ॥ तां संहितामसौ सूतो नैमिषारण्ये शौनकादिभ्यो वक्ष्यति । श्रोतुरादरदार्ढ्यायेयं संप्रदायप्रवृत्तिरुक्ता ॥४२॥ इति श्रीभागवते द्वादश० चू० चतुर्थोऽध्यायः ॥ ४॥ पंचमे तु समासेन परब्रह्मोपदेशतः । राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ १ ॥ श्रीशुक उवाच । हे नृप । अत्र भगवान्हरिरभीक्ष्णं वर्ण्यते । यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः॥१॥हे राजन्। एवंभूतं हरिं शृण्वतः कुतोऽन्यस्माद्भयशंका । हे नृप । त्वं तु कृतार्थोऽसि । अतोऽहं मरिष्यामीत्यज्ञानबुद्धिं त्यज । यथा देहः प्रागभूत एव अद्य जातः नंक्ष्यति । न त्वं पूर्वं नाभूर्न चाद्य जातोऽसि । अतो न नंक्ष्यसि ॥२॥ हे राजन् । त्वं तु पुत्रपौत्रादिरूपवान् बीजांकुरवन्न भविष्यसि

स वै मह्यं महाराज भगवान्बादरायणः ॥ इमां भागवतीं प्रीतः संहितां वेदसंमिताम् ॥ ४१ ॥ एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये ॥ दीर्घसत्रे कुरुश्रेष्ठ संपृष्टः शौनकादिभिः ॥ ४२॥ इति श्रीभा० म० द्वादशस्कन्धे चतुर्लय० चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान्हरिः ॥ यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥१॥ त्वं तु राजन्मरिष्येति पशुबुद्धिमिमां जहि ॥ न जातः प्रागभूतोऽद्य देहवत्त्वं न नंक्ष्यसि ॥ २ ॥ न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ॥ बीजांकुरवद्देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ३ ॥ स्वप्ने यथा शिरश्छेदः पंचत्वाद्यात्मनः स्वयम् ॥ यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः॥४॥घटे भिन्ने यथाऽऽकाश आकाशः स्याद्यथा पुरा ॥ एवं देहे मृते जीवो ब्रह्म संपद्यते पुनः॥५॥मनः सृजेति वै देहान्गुणान् कर्माणि चात्मनः ॥ तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥ ६ ॥

यतो देहादेर्भिन्नत्वं काष्ठाद्यथा वह्नेः । एवं च देहाद्देहो जायते नात्मेति ॥ ३ ॥ किंच यथा स्वप्ने स्वशिरश्छेदं स्वयं पश्यति एवं जागरेऽपि । यस्माद्देहस्य मरणादिकं पश्यति तथाऽऽत्मनः इदं भ्रममात्रम् । वस्तुतः आत्माऽजरामरः ॥४॥ यथा घटे भिन्ने घटाकाशो महाकाशः स्यात् एवं देहे तत्त्वज्ञानेन लीने सति जीवः पुनर्ब्रह्म संपद्यते ॥ ५ ॥ मनो देहादीन् सृजति । तच्च मनो माया सृजति । ततो मायाद्युपाधिसमवाया ज्जीवस्य संसृतिर्न वस्तुतः ॥ ६ ॥

यथा तैलमधिष्ठानं वर्त्तिरग्निरेषां संयोगाद्दीपस्य दीपत्वं तथा कर्म मनो देहश्चैतन्यमेतैर्मनसः संसारो न चात्मनः ॥ ७ ॥ ननु तत्र प्रत्यक्षः आत्मा कुतस्तत्राह । आत्मा स्वयंज्योतिः स्थूलसूक्ष्मदेहयोः परो निर्विकारोऽस्ति ॥८॥ हे प्रभो ! एवमनुमानगर्भिण्या बुद्ध्या वासुदेवानुचिंतया देहाद्युपाधिस्थमात्मानमात्मनि विचारय ॥९॥ एवं कृते द्विजप्रेरितस्तक्षकस्त्वां न धक्ष्यति ॥ १० ॥ अपि च योऽहं स ब्रह्मैव यद्ब्रह्म तदहमेव एवं समीक्षन्नुपाधिरहितः आत्मन्यात्मानं कृत्वा ॥ ११ ॥ पादे विषाननैर्दशंतं तक्षकं शरीरं विश्वं चात्मनः पृथक् न द्रक्ष्यसि ॥१२॥

स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ॥ ततो दीपस्य दीपत्वमेवं देहकृतो भवः ॥ रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥७॥ न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ॥ आकाश इव चाधारो ध्रुवोऽनंतोपमस्ततः ॥८॥ एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ॥ बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिंतया ॥ ९ ॥ चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ मृत्यवो नोपधक्ष्यंति मृत्यूनां मृत्युमीश्वरम् ॥ १० ॥ अहं ब्रह्म परं ब्रह्म ब्रह्माहं परमं पदम् ॥ एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥ ११ ॥ दशंतं तक्षकं पादे लेलिहानं विषाननैः ॥ न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ १२ ॥ एतत्ते कथितं तात यथात्मा पृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ १३ ॥ इति श्रीभा० महा० द्वा० तत्त्वोपदेशेन मृत्युभीतिनिवारणं नाम पंचमोऽध्यायः ॥ ५ ॥ सूत उवाच ॥ एतन्निशम्य मुनिनाभिहितं परीक्षिद्व्यासात्मजेन निखिलात्मदृशा समेन ॥ तत्पादमूलमुपसृत्य नतेन मूर्ध्ना बद्धांजलिस्तमिदमाह स विष्णुरातः ॥ १ ॥

हे तात ! यथा त्वं हरेर्लीलां पृष्टवांस्तथा ते कथितम् । भूयः किं श्रोतुमिच्छसि ॥ १३ ॥ इति श्रीभागवते महा० द्वादश० चू० पंचमोऽध्यायः ॥५॥ षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात् ॥ वेदशाखविभागोक्तौ त्रिवेदिव्यासवर्णनम् ॥१॥ सूत उवाच । एवं राजा परीक्षित शुकोक्तं निशम्य तत्पादौ शिरसि निधाय बद्धांजलिः सन्निदमाह ॥ १ ॥

१ द्रष्टृदृश्यान्वयव्यतिरेकयुक्त्या ।

राजोवाच । हे मुने । अहं करुणात्मना भवताऽनुगृहीतः कृतार्थोऽस्मि यतो मे हरिः श्रावितः ॥ २ ॥ किंच मत्तुल्येष्वज्ञेष्वनुग्रह इति यत्तदच्युतात्मनां वोऽद्भुतं न मन्ये ॥ ३ ॥ एतां पुराणसंहितां त्वत्तो वय श्रुतवंतः यस्यामुत्तमश्लोको वर्ण्यते ॥ ४ ॥ हे भगवन् । त्वया दर्शितं ब्रह्म प्रविष्टोऽहमतस्त क्षकादिभ्यो मृत्युभ्यो न बिभेमि ॥ ५ ॥ हे ब्रह्मन् । अहमिंद्रियाणि नियम्य मुक्तकामाशयं चेतोऽधोक्षजे प्रवेश्य प्राणान् विसृजामि । आज्ञां देहि ॥ ६ ॥ किंच त्वया भगवतः क्षेमंपदं दर्शितमत एव मेऽज्ञानं ज्ञानविज्ञाननिष्ठया निरस्तम् ॥ ७ ॥ सूत उवाच । इत्याकर्ण्य शुकस्तमाज्ञाप्य राज्ञा पूजितः सन्

राजोवाच ॥ सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ॥ श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥ २ ॥ नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम् ॥ अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥ पुराणसंहितामेतामश्रौष्म भवतो वयम् ॥ यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥ भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ॥ प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ॥ ५ ॥ अनुजानीहि मां ब्रह्मन्वाचं यच्छाम्यधोक्षजे ॥ मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥ ६ ॥ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ॥ भवता दर्शितं क्षेमं परं भगवतः पदम् ॥ ७ ॥ सूत उवाच ॥ इत्युक्तस्तमनुज्ञाप्य भगवान्बादरायणिः ॥ जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥ परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ॥ समाधाय परं दध्यावस्पंदासुर्यथा तरुः ॥ ९ ॥ प्राक्कूले बर्हिष्यासीनो गंगाकूलं उदङ्मुखः ॥ ब्रह्मभूतो महायोगी निःसंगश्छिन्नसंशयः ॥ १० ॥ तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना ॥ हंतुकामो नृपं गच्छन्ददर्श पथि कश्यपम् ॥ ११ ॥ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ॥ द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥

भिक्षुभिः सहजगाम ॥ ८ ॥ परीक्षिदप्यात्मबुद्ध्या मनः समाधाय परमात्मानं दध्यौ ॥ ९ ॥ तदाह । गंगातटे पूर्वाग्रे दर्भासने उदङ्मुखः आसीनो निःसंगो गतसंशयो राजा ब्रह्मभूतो बभूव ॥ १० ॥ तदा हे विप्राः । क्रुद्धेन द्विजपुत्रेण प्रेरितस्तक्षको नृपं हंतुकामो गच्छन् सन् मार्गे विप्रं दृष्ट्वाऽऽह ॥ ११ ॥ हे विप्र । त्वं कः । क्व गमिष्यसि । सोऽप्याह । अहं द्रव्येच्छया परीक्षितो विषोत्तारणाय गच्छामि तदा सोऽहं तक्षको मद्विषं दूरीकुर्वित्याह । तदा द्विजेन तक्षकालीढवटवृक्षस्य भस्मीभूतस्य पुनरंकुरादिक्रमेणोत्थापनाद् विषं दूरीकृतम् । तदा विस्मितस्तक्षकस्तं द्विजमतिद्रव्यैः संतर्प्य द्विजरूपेण

गत्वा स्वस्वरूपेण नृपमदशत ॥ १२ ॥ तदा ब्रह्मभूतस्य राज्ञो देहोऽहिविषाग्निना सद्यो भस्मसाद् बभूव ॥ १३ ॥ तदा सर्वत्र महान् हाहाकार आसीत् सर्वे देवासुरनराः विस्मिताः आसन् ॥ १४ ॥ तदा देवा दुंदुभयो नेदुः । गंधर्वाप्सरसो जगुः । देवाः पुष्पवृष्टिं चक्रुः॥ १५॥ अथ जनमेजयस्तक्षकभक्षितं स्वपितरं श्रुत्वा क्रुद्धः सन् द्विजैः सह सर्पान् सत्रे आजुहाव ॥ १६ ॥ तस्मिन् सर्पयज्ञे दह्यमानान् महोरगान् दृष्ट्वा भीतस्तक्षकः इंद्रं शरणं ययौ ॥ १७॥ तदा राजा तक्षकमपश्यन् द्विजानाह । हे द्विजाः । सर्पाऽधमस्तक्षकः कस्मान्न दह्यते ॥ १८ ॥ ते ऊचु

ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना॥ बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥१३ ॥ हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः ॥ विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥ १४ ॥ देवदुंदुभयो नेदुर्गंधर्वाप्सरसो जगुः॥ववर्षुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥ जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ॥ तथा जुहाव संक्रुद्धो नागान्सत्रे सह द्विजैः ॥ १६ ॥ सर्पसत्रे समिद्धाग्नौ दह्यमानान्महोरगान् ॥ दृष्ट्वेंद्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥१७॥ अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान्॥ उवाचतक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥ तं गोपायति राजेंद्र शक्रः शरणमागतम् ॥ तेन संस्तंभितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥ पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ॥ सहेंद्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २०॥तच्छ्रुत्वा जुहुवुर्विप्राः सहेंद्रं तक्षकं मखे ॥ तक्षकाशु पतस्वेह सहेंद्रेण मरुत्वता ॥ २१॥ इति ब्रह्मोदिताक्षेपैः स्थानादिंद्रः प्रचालितः ॥ बभूव संभ्रांतमतिः सविमानः सतक्षकः ॥ २२ ॥ तं पतंतं विमानेन सहतक्षकमंबरात् ॥ विलोक्यांगिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥

हे नृप । शरणागतं तमिंद्रो रक्षति । अतोऽग्नौ न पतति ॥ १९ ॥एवं श्रुत्वा नृपः ऋत्विजः आह । हे विप्राः सेंद्रस्तक्षकोऽग्नौ किमिति न पात्यते ॥ २० ॥ ततो विप्राः राजवाचः श्रुत्वात्र यज्ञे सेंद्रं तक्षकं जुहुवुः । हे तक्षक । इहेंद्रेण सहाशु पत ॥२१ ॥ इति ब्राह्मणोक्तैः कठोरवाक्यैः सविमानः सतक्षकः इंद्रः स्थानात् प्रचलितो बभूव ॥ २२ ॥ तदाऽऽकाशात् पतंतमिंद्रं विलोक्य बृहस्पतिः राजानमाह ॥ २३ ॥

हे राजन् । अयं सर्पराट् तक्षको वधं नार्हति । यतोऽनेनामृतं पीतम् ॥ २४ ॥ किंच हे नृप । जंतोर्जीवितं मरणं परलोकगतिः स्वकर्मणैव भवति । अतः सुखदुःखस्य प्रदातान्यस्यान्यो न ॥ २५ ॥ सर्पचोराग्निविद्युत्क्षुत्तृड्व्याध्यादिभिर्जंतुर्मृत्युं प्राप्नोतीति यत्तदारब्धं कर्मैव भुंक्ते ॥ ॥ २६ ॥ इति हेतोरिदं हिंसाफलं सत्रं समाप्यताम् । हे नृप ! अनागसः सर्पाः दग्धाः तदपि जनैर्दिष्टं भुज्यते ॥ २७ ॥ एवमुक्तो नृपः सर्पसत्रादुपरतः सन् बृहस्पतिं पूजयामास ॥ २८ ॥ ननु कथं विदुषामप्येवं मोहो यतो ब्रह्मकोपाद्राज्ञो मृत्युर्जनमेजयकोपात् सर्पाणामित्यादि

नैष त्वया मनुष्येंद्र वधमर्हति सर्पराट् ॥ अनेन पीतममृतमथवा अजरामरः ॥ २४ ॥ जीवितं मरणं जंतोर्गतिः स्वेनैव कर्मणा ॥ राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥ २५ ॥ सर्पचोराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप ॥ पंचत्वमृच्छते जंतुर्भुंक्त आरब्धकर्म तत् ॥ २६ ॥ तस्मात्सत्रमिदं राजन् संस्थीयेताभिचारिकम् ॥ सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥ सूत उवाच ॥ इत्युक्तः स तथेत्याह महर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥ सैषा विष्णोर्महामायाऽबाध्ययाऽलक्षणा यया ॥ मुह्यंत्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः ॥ २९ ॥ न यत्र दंभीत्यभया विराजिता मायात्मवादेऽसकृदात्मवादिभिः ॥ न यद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्तिमत् ॥ ३० ॥ न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम् ॥ तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन्विरमेत्स्वयं मुनिः ॥ ३१ ॥

तत्राह । सैषा विष्णोर्महामाया । अनया प्राणिनो बाध्यबाधकतां व्रजंति ॥ २९ ॥ कथं तर्हि मायानिवृत्तिः । ईश्वरभजनादित्याह । आत्मवादिभिरात्मवादे क्रियमाणे यत्र स्वरूपे इयं मायाऽभया न प्रकाशिता किं तु भीत्या स्वकार्यं मोहादि कर्म कुर्वती कथंचिद्वर्तत इति प्रतिपादिता ॥ ३० ॥ यत्र कार्यकारणफलैर्युक्तो जीवश्चाहंकारात्मको नास्ति तस्मिन्मुनिरहंकारादीन् निषिध्य क्रीडेत ॥ ३१ ॥

---

१ अंशभूताः । २ देहेषु । ३ क्रोधादीभिः । ४ मायाकपटत्वानयं पुमानित्येवं भूतायां बुद्धावसकृदुल्लिख्यमाना मायेत्यर्थः । ५ यस्मिन् । ६ मायाश्रयः । ७ नास्तीत्यन्वयः । ८ सृजता कारकवर्गेण सहोभयोः सृज्यस्रष्ट्रोः ।

योगिनो देहाद्यहंभावं विसृज्य हृदि ध्यानादिना यन्निश्चितं तद्वैष्णवं परं पदं कथयंति॥३२॥येषामहंममेति दौर्जन्यं न ते एतत् पदं गच्छंति॥३३॥ अस्य प्राप्त्युपायमाह। परापवादनिंदादीन् सहेत।कंचन नावमन्येत।इमं देहमाश्रित्य केनचिद्वैरं नकुर्वीत॥३४॥सूतः शास्त्रसमाप्तौ गुरुं प्रणमति। यच्चरणकमलध्यानादिना संहितां प्राप्तोऽस्मि तस्मै व्यासाय भगवते नमः॥३५॥शौनक उवाच।व्यासशिष्यैः पैलादिभिर्वेदाःकतिधा व्यस्तास्तद्

पैरं पदं वैष्णवमामनंति तत् यन्नेति नेतीत्यतदुत्सिसृक्षवः ॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥ ३२ ॥ त एतदधिगच्छंति विष्णोर्यत्परमं पदम् ॥ अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥ नमो भगवते तस्मै कृष्णायाकुंठमेधसे ॥ यत्पादांबुरुहध्यानात्संहितामध्यगामिमाम् ॥ ३५ ॥ शौनक उवाच ॥ पैलादिभिर्व्यासशिष्यै वेंदाचार्यैर्महात्मभिः ॥ वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ॥ ३६ ॥ सूत उवाच ॥ समाहितात्मनो ब्रह्मन्न ब्रह्मणः परमेष्ठिनः ॥ हृदाकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ ३७ ॥ यदुपासनया ब्रह्मन् योगिनो मलमात्मनः ॥ द्रव्यक्रियाकारकाख्यं धूत्वा यांत्यपुनर्भवम् ॥ ३८ ॥ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् ॥यत्तल्लिंगं भगवतो ब्रह्मणः परमात्मनः ॥ ३९ ॥ शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ॥ येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ४० ॥

ब्रूहि ॥ ३६ ॥ सूत उवाच ॥ हे शौनक ! आदौ ब्रह्मणो हृदयाऽऽकाशान्नादोऽभूद्यो नादः श्रोत्रनिरोधादस्मदादिष्वपि वितर्क्यंते ॥ ३७ ॥ यदुपासनया योगिनोध्यात्मादिमलं धूत्वा मोक्षं यांति ॥३८॥ततः स स्वत एव हृदि प्रकाशमानस्त्रिवृदोंकारोऽभूत् ॥३९॥ किंच यस्य कर्णरोधादिनाऽवृत्तिकेऽपि श्रोत्रे सति शून्येऽपींद्रिये ज्ञानं यस्यैतादृशोऽयमव्यक्तमोंकारं शृणोति येन प्रणवेन बृहती वैखरी वाग् व्यज्यते ॥ ४० ॥

१ यदेतत्तदेवं परं पदमित्यर्थः । २ आत्मव्यतीरिक्तं त्यक्तुमिच्छवः । ३ द्रव्यमधिभूतक्रियाऽध्यात्मं कारकमधिदैवम् । ४ त्रिमात्रः । ५ गमकम् । ६ हृदयाकाशे ।

स प्रणवो ब्रह्मणः साक्षाद्वाचकः । सर्वमन्त्रोपनिषद्वेदादीनां बीजम् ॥ ४१ ॥ प्रणवस्याऽकाराद्यास्त्रयो वर्णाः आसन् ॥ ४२ ॥ तेभ्योऽजोऽक्षरसमुदायमंतःस्थोष्मादिकमसृजत् ॥ ४३ ॥ तेन समुदायेन ब्रह्मा चतुर्भिश्चतुरो वेदानसृजत ॥४४॥ ततो ब्रह्मा स्वपुत्रान् मरीच्यादीन् वेदानध्यापयत् । मरीच्यादयश्च स्वपुत्रेभ्यः आदिशन्॥ ४५ ॥ एवं चतुर्युगेषु वेदास्तच्छिष्यैः परंपरया प्राप्ताः ॥ ४६ ॥ ततः क्षीणायुषो मंदबुद्धीञ्ज

स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ॥ स सर्वमंत्रोपनिषद्वेदबीजं सनातनम् ॥ ४१ ॥ तस्य ह्यासंस्त्रयो वर्णा आकाराद्या भृगूद्वह ॥ धार्यंते यैस्त्रयो भावा गुणानामार्थवृत्तयः ॥ ४२ ॥ततोऽक्षरसमाम्नायमसृजद्भगवानजः॥ अंतःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ४३ ॥ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः॥सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ॥ ४४ ॥ पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान् ॥ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ ४५ ॥ ते परंपरया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ४६ ॥ क्षीणायुषः क्षीणसत्त्वान्दुर्मेधान्वीक्ष्य कालतः ॥ वेदान्ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः ॥४७॥अस्मिन्नप्यंतरे ब्रह्मन् भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये॥ ४८ ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः ॥ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ ४९ ॥ ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ॥ चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥ ५० ॥ तासां स चतुरः शिष्यानुपाहूय महामतिः ॥ एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ ५१ ॥

नान्वीक्ष्य ते वेदाः द्वापरांते महर्षिभिर्विभक्ताः ॥ ४७ ॥ अथास्मिन् वैवस्वतमन्वंतरे ब्रह्मशिवादिभिधर्मरक्षया प्रार्थितो भगवान् ॥ ४८ ॥ पराशरात्सत्यवत्यामंशेनावतीर्णः संश्चतुर्विधं वेदं चक्रे ॥ ४९ ॥ चातुर्विध्यमेवाह । ऋग्यजुःसामाथर्वणां मंत्राणां राशीन् तत्तत्प्रकरणभेदैरुद्धृत्यतैर्मन्त्रैश्चतस्रः संहिताश्चक्रे ॥ ५० ॥ ततो व्यासश्चतुरः शिष्यानाहूय तेभ्यः एकैकां संहितां ददौ ॥ ५१ ॥

---

१ रहस्यम् । २ अन्तःस्थाः, यरलवाः, ऊष्माणः शषसहाः ,स्वराः अकारादयः,कादयो मावसानाः स्पर्शाः । ३ चतुर्भिर्होतृभिरनुष्ठेयं कर्म चातुर्होत्रम् ।

पैलाय ऋग्वेदसंहितां वैशंपायनाय निगदाख्यां यजुःसंहिताम् ॥ ५२॥ जैमिनये छन्दोगाख्यां सामसंहितां सुमंतवेऽथर्ववेदस्याथर्वांगिरसींनाम
संहितां ददौ ॥ ५३ ॥तत्र पैलः स्वसंहितां द्वेधा विभज्येन्द्रप्रमितये बाष्कलाय चाह ॥ ५४॥ स बाष्कलः स्वां संहितां चतुर्धा व्यस्य बोध्य
याज्ञवल्क्यपराशराऽग्निमित्रेभ्यश्चतुर्भ्यः प्राह ॥ ५५ ॥ इन्द्रप्रमितिः स्वां संहितां स्वसुतं मांडूकेयमध्यापयामास मांडूकेयस्य शिष्यो देवमित्रः
सौभर्यादिभ्यः ऊचिवान् ॥ ५६ ॥ मांडूकेयसुतः शाकल्यस्तां पंचधा व्यस्य वात्स्यमुद्गलशालीयगोखल्यशिशिरान् प्राह ॥ ५७ ॥ शाकल्य

पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ॥ वैशंपायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥ ५२ ॥ साम्नां जैमिनये प्राह
तथा छन्दोगसंहिताम् ॥ अथर्वांगिरसी नाम स्वशिष्याय सुमंतवे॥५३॥ पैलः स्वां संहितामूच इंद्रप्रमितये मुनिः॥
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥५४॥चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ॥ पराश
रायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥ ५५॥ अध्यापयत्संहितां स्वां मांडूकेयमृषिं कविम् ॥ तस्य शिष्यो देवमित्रः
सौभर्यादिभ्य ऊचिवान् ॥ ५६ ॥शाकल्यस्तत्सुतस्तां तु पंचधा व्यस्य संहिताम्॥ वात्स्यमुद्गलशालीयगोखल्यशि
शिरेष्वधात् ॥५७ ॥जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ॥बलाकपैजवैतालविरजेभ्यो ददौ मुनिः॥५८ ॥
बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ॥ चक्रे बालायनिर्भज्य काशारश्चैव तां दधुः ॥ ५९ ॥ बह्वृचाः
संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैनं छंदसां व्यासं सर्वपापैः प्रमुच्यते ॥६०॥ वैशंपायनशिष्या वै चरकाध्व
यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम ॥ ६१ ॥

शिष्यो जातूकर्ण्यः स्वसंहितां त्रिधा विभज्य निरुक्तं च चतुर्थं कृत्वा बलाकपैजवैतालविरजेभ्यो ददौ॥ ५८ ॥ ततः पूर्वोक्तबाष्कलस्य पुत्रो
बाष्कलिः सर्वशाखाभ्यो वालखिल्याख्यसंहितां चक्रे। तां संहितां बालायन्यादयो विभज्याधीतवंतः काशारश्च ॥५९॥ एताः बह्वृचाः संहिता
एभिः ऋषिभिर्धृताः एषां छंदसां विभागं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ६० ॥ यजुर्वेदतैत्तिरीयशाखोत्पत्तिप्रसंगमाह ॥ अथ वैशंपायनस्य
शिष्याश्चरकाध्वर्यवो यतः स्वगुरोर्ब्रह्महत्यानाशनं व्रतं चेरुः अतश्चरका इति नाम प्रापुः ॥ ६१ ॥

तेषां मध्ये याज्ञवल्क्यः आह । गुरो ! एतेषां चरितेन कियत सुदुश्चरमप्यहं चरिष्यामि ॥ ६२ ॥ इत्याकर्ण्य गुरुः कुपितः सन्नाह । हे शिष्य ! त्वया सर्वेषामपमानः कृतः अतो मदधीतं त्यक्त्वा याहि ॥ ६३ ॥ ततो याज्ञवल्क्यो यजुर्गणं छर्दित्वा गतः ॥ ६४ ॥ तच्छार्दितं दृष्ट्वा

याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत ॥ चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम ॥ ६२॥ इत्युक्तो गुरुर प्याह कुपितो याह्यलं त्वया ॥ विप्रावमंत्रा शिष्येण मदधीतं त्यजाश्विति ॥ ६३ ॥ देवरातसुतः सोऽपि छर्दित्वायजु षां गणम् ॥ ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥ ६४ ॥ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ॥ तैत्तिरी या इति यजुःशाखा आसन्सुपेशलाः ॥ ६५॥ याज्ञवल्क्यस्ततो ब्रह्मन्छन्दांस्यधिगवेषयन्॥ गुरोरविद्यमानानि सूपत स्थेऽर्कमीश्वरम् ॥ ६६ ॥ याज्ञवल्क्य उवाच ॥ ॐ नमो भगवते आदित्यायाखिलजगतामात्मरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषु बहिरपि चाकाशे इवोपाधिनाऽव्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७ ॥

मुनयस्तित्तिरिपक्षिणो भूत्वा तद्भक्षणं चक्रुः । ततो हेतोस्तैत्तिरीयाः यजुःशाखा आसन् ॥ ६५ ॥ अथ याज्ञवल्क्यो गुरोरलब्धवेदः सन् सूर्यमुपतस्थे स्म ॥ ६६ ॥ याज्ञवल्क्य उवाच ॥ हे भगवन् ! तुभ्यमादित्याय नमोनमः । किंच ब्रह्मादितृणपर्यंतानां जगता

१ एवं ह्यत्र कथा ब्रह्मांडे । एकदा देवयज्ञे ब्राह्मणापमाने कृते सति वैशंपायनस्य ब्रह्महत्याऽभूत् । ऋषय ऊचुः । चरकाध्वर्यवः केन कारणं ब्रूहि तत्त्वतः । किं चीर्णं कस्य वा हेतोश्चरकत्वं हि भेजिरे । सूत उवाच । कार्यमासीदृषीणां च किंचिद् ब्राह्मणसत्तमाः । मेरुपृष्ठं समासाद्य तैस्तदा त्विति मंत्रितम् । यो वाऽत्र सप्तरात्रेण नागच्छेद् द्विजसत्तमः । स कुर्याद् ब्रह्महत्यां वै समयो नः प्रकीर्तितः । ततस्ते सगणाः सर्वे वैशंपायनवर्जिताः । आययुः सप्तरात्रेण यत्र संधिः कृतोऽभवत् । ब्राह्मणानां तु वचनाद् ब्रह्महत्यां चकार सः । शिष्यानथ समानीय स वैशंपायनोऽब्रवीत् । ब्रह्महत्यां चरध्वं वै मत्कृते द्विजसत्तमाः । सर्वे युगं समागम्य ब्रूत मा प्रेरितं वचः । तदा स्वगृहमागत्य शिष्यानाह । इमां हत्यां दूरीकुरुध्वमिति ? ।

मात्मस्वरूपेणांतर्हृदयेषु कालस्वरूपेण बहिरपि च वर्तमानो यस्त्वमेक एव लोकयात्रामनुवहसि ॥ ६७॥ हे विबुधर्षभ ! प्रत्यहं त्रिषवणं वैदिकक र्ममार्गेण स्तुवतां भक्तानामखिलदुःखनाशक तव मंडलं ध्यायेम ॥ ६८ ॥ किंच यो भवान् स्थावरजंगमानां जीवानां मनइंद्रियप्राणान् स्वय मंतर्यामी प्रवर्तयति ॥६९॥ यः एक एव भवानंधकारसंज्ञाऽजगरगिलितं मृतकमिवाऽचेतनमिमं लोकं दृष्ट्वा कृपया तं श्रेयसि प्रवर्तयति॥७०॥

यदु ह वा व विबुधर्षभ सवितरदस्तपत्यनुसवमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनभग वतः समभिधीमहि तपनमंडलम् ॥ ६८ ॥ य इह वा व स्थिरचरनिकराणां निजनिकेतनानां मनइंद्रियासुगणानना त्मनः स्वयमात्मांतर्यामी प्रचोदयति ॥६९ ॥य एवेमं लोकमतिकरालवदनांधकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकंपयापरमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनंश्रेयसिस्वधर्माख्यात्मावस्थाने प्रवर्त्तयत्यवनि पतिरिवासाधूनां भयमुदीरयन्नटति ॥ ७० ॥ परित: आशापालैस्तत्रतत्र कमलकोशांजलिभिरुपहृतार्हणः ॥ ७१ ॥ अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वंदितमहमयातयामयजुष्काम उपसरामीति ॥७२॥सूत उवाच ॥ एवं स्तुतः स भगवान् वाजिरूपधरो हरिः॥ यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥७३॥ यजुर्भिरकरोच्छाखा दशपंचशतैर्विभुः ॥ जगृहुर्वाजसन्यस्ताः काण्वमाध्यंदिनादयः ॥ ७४ ॥

भवानिंद्रादिलोकपालैः कमलकोशसदृशैरंजलिभिर्दत्तार्घः ॥७१ ॥ हे भगवन् ! ब्रह्मादिभिर्वंदितं तव चरणकमलयुगमयातयामयजुष्कामोऽहं भजामि ॥ ७२ ॥ सूत उवाच ॥ एवं स्तुतो वाजिरूपधरः सूर्योऽयातयामानि यजूंषि मुनये प्रादात् ॥ ७३ ॥ याज्ञवल्क्यस्तैर्यजुर्भिः पंचदश शाखाः अकरोत् । रविणाऽश्वरूपेण केसरेभ्यस्त्यक्ताः अतो वेगेन त्यक्ताः शाखाः काण्वमध्यंदिनाः जगृहुः ॥ ७४ ॥

१ जडान् । २ अन्यैर्यथावदविज्ञातानि ।

अथ सामवेदशाखाविभागमाह । जैमिनेः सुतः सुमंतुः । तस्य सुतः सुन्वान् । ताभ्यामेकैकां संहितां प्राह ॥ ७५ ॥ जैमिनिशिष्यः सुकर्माऽपि सामवेदस्य सहस्रं संहिताभेदं चक्रे ॥ ७६ ॥ ततः सुकर्मणः शिष्यास्त्रयो हिरण्यनाभः १ पौष्यंजिः २ आवंत्यः ३ ।एते ताः संहिता जगृहुः ॥७७॥तेषां त्रयाणां शिष्याः प्रत्येकं पंच शतान्यासन् ॥ ते तावतीः शाखाः यथायथं जगृहुः॥ ७८ ॥ ततः पौष्यंजिशिष्याः पंच–लौगाक्षिः १ मांगालिः २ कुल्यः ३ कुशीदः ४ कुक्षिः ५ । एते प्रत्येकं शतंशतं संहिताः जगृहुः ॥ ७९ ॥ हिरण्यनाभस्यान्यः कृतनामा शिष्यश्चतुर्विंश

जैमिनेः सामगस्यासीत्सुमंतुस्तनयो मुनिः ॥ सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ७५ ॥ सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान्॥सहस्रं संहिताभेदं चक्रे साम्नां ततो द्विजः ॥ ७६ ॥ हिरण्यनाभः कौशल्यः पौष्यंजिश्च सुकर्मणः॥ शिष्यौ जगृहतुश्चान्य आवंत्यो ब्रह्मवित्तमः ॥ ७७ ॥ उदीच्याः सामगाः शिष्या आसन्पंच शतानि च ॥ पौष्यंज्यावंत्ययोश्चापि तांश्च प्राच्यान् प्रचक्षते ॥७८॥ लौगाक्षिर्मांगलिः कुल्यः कुशीदः कुक्षिरेव च॥ पौष्यंजिशिष्या जगृहुः संहितास्ते शतंशतम् ॥ ७९ ॥ कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः॥ शिष्य ऊचे स्वशिष्येभ्यः शेषा आवंत्य आत्मवान् ॥८०॥ इति श्रीभागवते महापुराणे द्वादशस्कंधे वेदशाखाविभागनि० नाम षष्ठोऽध्यायः ॥ ६ ॥ सूत उवाच ॥ अथर्ववित्सुमंतुश्च शिष्यमध्यापयत्स्वकम् ॥ संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ १ ॥ शौल्कायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ॥ वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥ कुमुदः शुनको ब्रह्मञ्जाजलिश्चाप्यथर्ववित् ॥ २ ॥

तिसंहिताः स्वशिष्येभ्य ऊचे । आवंत्यः शेषाः संहिताः शिष्येभ्यः आह ॥८०॥ इति श्रीभा० म० चू० द्वादश० षष्ठोऽध्यायः ॥६॥ सप्तमेऽथर्वविस्तारः पुराणव्यसनं ततः ॥ पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥१॥सूत उवाच ॥ अथर्ववेदविभागमाह ।सुमंतुः कबंधनामानं शिष्यं स्वसंहितां प्राह । सोऽपि तां द्वेधा विभज्य पथ्याय वेददर्शाय च दत्तवान्॥१॥वेददर्शस्य शिष्याश्चत्वारः–शौल्कायनिः१ब्रह्मबलिः२मोदोषः३ पिप्पलायनिः ४ येभ्यश्चतस्रः संहिताः ददौ । अथ पथ्यः स्वशिष्येभ्यः कुमुदः १ शुनकः२जाजलिः३इत्याख्येभ्यः स्वसंहितां त्रेधा विभज्य प्रादात् ॥२॥

शुनकः स्वशिष्याभ्यां बभ्रुसैन्धवायनाभ्यां द्वे संहिते प्राह । तौ सावर्ण्यादिभ्यः ऊचतुः ॥ ३ ॥ नक्षत्रकल्पादयोऽथर्वणाऽऽचार्याः आसन् अथ पौराणिकान् शृणु ॥ ४ ॥ आदौ व्यासः षट् पुराणसंहिताः कृत्वा मत्पित्रे रोमहर्षणाय ददौ। तन्मुखात्त्रय्यारुणिः १कश्यपः २ सावर्णिः ३ अकृतव्रणः ४ वैशंपायनः ५ हारीतः ६ इमे पौराणिकाः संहिताः षडध्यैयत। येषां षण्णां शिष्योऽहं ताः सर्वाः अधीतवान् ॥ ५ ॥ ६ ॥ कश्यपः १ अहं २ सावर्णिः ३ अकृतव्रणः ४ एते वयं व्यासशिष्यान्मूलसंहिताः अध्यैमहि ॥ ७ ॥ हे शौनक ! अथ ब्रह्मर्षिभिर्निरूपितं पुरा

बभ्रुः शिष्योऽथांगिरसः सैन्धवायन एव च॥ अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे ॥ ३ ॥ नक्षत्रकल्पः शांतिश्च कश्यपांगिरसादयः ॥ एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ॥ ४ ॥त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ॥ वैशंपायनहारीतौ षड् वै पौराणिका इमे ॥ ५ ॥ अधीयंत व्यासशिष्यात्संहितां मत्पितुर्मुखात् ॥ एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥६॥ कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ॥ अधीमहि व्यासशिष्याच्चतस्रो मूल संहिताः ॥ ७ ॥ पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ॥ शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ८ ॥ सर्गोऽस्यांथ विसर्गश्च वृत्ती रक्षांतराणि च ॥ वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ॥ ९ ॥ दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ॥ केचित्पंचविधं ब्रह्मन्महदल्पव्यवस्थया ॥ १० ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ॥ भूतसूक्ष्मेंद्रियार्थानां संभवः सर्ग उच्यते ॥ ११ ॥

णलक्षणं शृणु ॥८॥ सर्गः १ विसर्गः २ वृत्तिः ३ रक्षा ४ मन्वंतराणि ५ वंशः ६ वंश्यानुचरितं ७ लयः ( मुक्ति ) ८ ऊतयः ९ आश्रयः १० ॥ ९ ॥ एभिर्दशलक्षणैर्युक्तं महापुराणं विदुः । सर्गः १ विसर्गः २ वंशः ३ मन्वंतराणि ४ वंश्यानुचरितम् ५ इति पंचलक्षणं पुराणमल्पं केचिदूचुः ॥१०॥ एषां दशलक्षणानामर्थमाह । महदहंकारभूतसूक्ष्मेंद्रियार्थादीनां संभवः सर्ग इत्युच्यते ॥ ११ ॥

१ जगतः । २ स्थानपोषणे । ३ हेतुशब्देन जीवाश्रयवासनाशब्दवाच्याः ऊतयो गृह्यन्ते । ४ अव्याकृतात्प्रधानान्महाँस्ततस्त्रिवृदहंकारस्ततो भूतादयः इति परम्परा ।

चराचरप्राणिनां संभवः विसर्गः२ ॥ १२ ॥ ईश्वरेण भूतानां स्थापिता या जीविका सा वृत्तिः ३॥१३ ॥ भगवतो याऽवतारलीला सा रक्षा ४ ॥१४॥मन्वंतरं मनुर्देवाः मनुपुत्राः इंद्रः ऋषयो हरेरवतार इति षड्विधम्॥१५॥शुद्धराजानां प्रसूतिर्वंशः ६ तद्वंशजानां वृत्तांतो वंश्यानुचरितम्॥७॥ ॥१६॥चतुर्विधः प्रलयः संस्था ८। तत्रैव मुक्तिरप्युक्ता॥१७॥अस्य जगतः सर्गादेर्निमित्तं यो जीवः सोऽत्र हेतुर्नामोतयो ज्ञेयाः९॥१८॥जाग्रदा

पुरुषानुगृहीतानामेतेषां वासनामयः ॥ विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥ १२ ॥ वृत्तिर्भूतानि भूतानां चराणामचराणि च ॥ कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥ १३॥ रक्षाऽच्युतावतारेहा विश्वस्यानु युगेयुगे ॥ तिर्यङ्मर्त्यर्षिदेवेषु हन्यंते यैस्त्रयीद्विषः ॥ १४ ॥ मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंशावतारश्च हरेःषड्विधमुच्यते ॥ १५ ॥ राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ॥ वंश्यानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ १६ ॥ नैमित्तिकः प्राकृतिको नित्य आत्यंतिको लयः ॥ संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः ॥१७ ॥ हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः ॥ यं चानुशयिनं प्राहुरव्याकृतमुतापरं ॥ १८ ॥ व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु॥ मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥ १९ ॥ पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु ॥ बीजादिपंचतांतासु ह्यवस्थासु युतायुतम् ॥ २० ॥ विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् ॥ योगेन वा तदात्मानं वेदेहा या निवर्त्तते ॥ ॥२१॥ एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ॥ मुनयोऽष्टादश प्राहुः क्षुल्लकानि महांति च ॥ २२ ॥

ह्यवस्थासु यस्य व्यतिरेकान्वयस्तद्ब्रह्मापाश्रय इत्युच्यते १० ॥१९॥ किं च यथा घटादिषु मृदादि द्रव्यं युक्तमयुक्तं च रूपनामसु च सत्तामात्रम् एवं गर्भाधानादिमरणांतासु नवदेहावस्थास्वधिष्ठानत्वेन च युतमयुतं च तदपाश्रयः ॥ २० ॥ यदा सर्गादीनां मायामयत्वानुसंधानेन स्वयमेव चित्तं विरमेत् तदाऽऽत्मानं वेद तदा चाविद्या निवर्त्तते ॥ २१ ॥ एवं लक्षणैर्लक्षितानि पुराणानि अष्टादश १८ मुनयः प्राहुः ॥२२ ॥

१ महदादीनाम् । २ पूर्वकर्मवासनाप्रधानः । ३ चकाराच्चराणि । ४ स्वभावेन । ५यैरवतारैः ।

तानि ब्राह्मं पाद्मं वैष्णवं लैंगं गारुडं नारदीयं श्रीमद्भागवतमाग्नेयं स्कांदम् ॥ २३ ॥ भविष्यं ब्रह्मवैवर्त्तं मार्कडेयं वामनं वाराहं मात्स्यं कौर्मं ब्रह्मांडमिति ॥ २४ ॥ हे शौनक ! इदं शाखाप्रणयनं मया कथितम् । इदं यः शृणोति तस्य ब्रह्मतेजोविवर्धनं भवति ॥ २५ ॥ इति श्रीभा० द्वादशस्कंधे चू० सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे तु तपश्चर्या मार्कंडेयस्य मोहकैः ॥ कामादिभिरसंमोहो नरनारायणस्तुतिः ॥ १ ॥ शौनक उवाच ॥ हे सूत ! त्वं चिरं जीव यतः संसारे भ्रमतां नृणां त्वं पारदर्शनोऽसि ॥ १ ॥ पुराणविभागप्रसंगात् तत्कर्तुमार्कडेयस्य चरितं

ब्राह्मं पाद्मं वैष्णवं च शैवं लैंगं सगारुडम् ॥ नारदीयं भागवतमाग्नेयं स्कांदसंज्ञितम् ॥२३॥ भविष्यं ब्रह्मवैवर्त्तं मार्कंडेयं सवामनम् ॥ वाराहं मात्स्यं कौर्मं च ब्रह्मांडाख्यमिति त्रिषट् ॥२४॥ ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः ॥ शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् ॥२५॥ इतिश्रीभा०म०द्वाद०अथर्ववेदपुराणलक्षणादिनि०सप्तमोऽध्यायः ॥७॥ शौनक उवाच ॥ सूत जीव चिरं साधो वद नो वदतां वर ॥ तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥१॥ आहुश्चिरायुषमृषिं मृकंडतनयं जनाः ॥ यः कल्पांते उर्वरितो येन ग्रस्तमिदं जगत् ॥ २॥ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः ॥ न वाऽधुनापि भूतानां संप्लवः कोऽपि जायते ॥३॥ एक एवार्णवे भ्राम्यन्ददर्श पुरुषं किल ॥ वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥४॥ एष नः संशयो भूयान् सूत कौतूहलं यतः ॥ तं नश्छिन्धि महायोगिन् पुराणेष्वपि संमतः ॥ ५॥ सूत उवाच ॥ प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः ॥ नारायणकथा यत्र गीता कलिमलापहा ॥ ६॥

पृच्छति शौनकः ॥ हे सूत ! सर्वे जनाः मार्कंडेयं दीर्घायुषमाहुः । यः कल्पांतेऽवशेषितो येन कल्पांतेनेदं जगत् ग्रस्तमिदं कथं जातम् ॥ २ ॥ किं च अधुना भूतानां कोऽपि प्रलयो नास्ति । एवं सत्यस्मिन् कल्पे सोऽस्मत्कुलोत्पन्नो भार्गवर्षभ इति च कथम् ॥ ३ ॥ एक एव समुद्रं भ्राम्यन् सन् वटपत्रपुटे शयानं बालकं ददर्श । इदमप्यघटितम् ॥ ४ ॥ हे सूत ! एवमेतद्विषये न संशयोऽस्ति तं छिन्द्धि ॥ ५ ॥ सूत उवाच हे शौनक ! अयं प्रश्नो लोकभ्रमनाशकस्त्वया कृतः । यत्र नारायणकथा गीयते ॥ ६ ॥

अथ प्राप्तद्विजातिसंस्कारो मार्कंडेयो वेदानधीत्य तपःस्वाध्यायसंयुतः ॥७॥ नैष्ठिकब्रह्मचारी जटिलो वल्कलांबरः कमण्डलुं दण्डमुपवीतं मेखलां कृष्णाजिनं कुशांश्च बिभ्रद्धर्मवृद्धयेऽग्न्यर्कगुरुविप्रात्मसु हरिमर्चयन् ॥ ८ ॥९ ॥ सायंप्रातर्भिक्षामाहृत्य गुरवे निवेद्य तदनुज्ञया स्वयं सकृद्भुंजन् नो चेदुपोषितः ॥ १० ॥ एवं तपःस्वाध्यायतत्परो वर्षाणामयुतायुतं हृषीकेशमाराधयन् दुर्जयं मृत्युं जिग्ये ॥११ ॥ तत्तपसा ब्रह्मा भृगुशिवदक्षादयो विस्मिताः आसन् ॥ १२ ॥ इत्थं तपआदिभिरधोक्षजं दध्यौ ॥१३ ॥ एवं योगेन चित्तं युंजतस्तस्य षण्मन्वंतरात्मकः कालो गतः

प्राप्तद्विजातिसंस्कारो मार्कंडेयः पितुः क्रमात ॥ छन्दांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥७॥ बृहद्व्रतधरः शांतो जटिलो वल्कलांबरः ॥ बिभ्रत्कमंडलुं दंडमुपवीतं समेखलम् ॥ ८ ॥ कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये ॥ अग्न्यर्कगुरुविप्रात्मस्वर्चयन् संध्ययोर्हरिम् ॥ ९ ॥ सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः ॥ बुभुजे गुर्वनुज्ञातःसकृन्नो चेदुपोषितः ॥ १० ॥ एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ॥ आराधयन्हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥ ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च ये परे ॥ नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥ इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ॥ दध्यावधोक्षजं योगी ध्वस्तक्लेशांतरात्मना ॥१३॥ तस्यैवं युंजतश्चित्तं महायोगेन योगिनः॥ व्यतीयाय महान् कालो मन्वंतरषडात्मकः ॥ १४ ॥ एतत्पुरंदरो ज्ञात्वा सप्तमेऽस्मिन्किलांतरे ॥ तपोविशंकितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥ गंधर्वाप्सरसः कामं वसंतमलयानिलौ ॥ मुनये प्रेषयामास रजस्तोकमदौ तथा ॥१६ ॥ ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ॥ पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो ॥ १७ ॥ तदाश्रमपदं पुण्यं पुण्यद्रुमलतांचितम् ॥ पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥

॥ १४ ॥ एतज्ज्ञात्वा इंद्रः सप्तमे मन्वंतरे मत्पदं ग्रहीष्यतीति शंकितः सन् तत्तपोनाशाय ॥१५॥ गंधर्वाप्सरसः कामं वसंतं सुगंधमयं वायुं लोभमदौ च मुनये प्रेषयामास ॥ १६ ॥ ते उत्तरं हिमाद्रेः पार्श्वं यत्र पुष्पभद्रा नदी यत्र चित्राख्या च शिला तत्र तदाश्रमं जग्मुः ॥ १७ ॥ कथंभूतमाश्रमं पुण्यद्रुमलताभिः शोभितं पुण्यर्षीणां कुलैर्व्याप्तमतिनिर्मलजलाशयम् ॥ १८ ॥

मत्तभ्रमरसंगीतं मत्तकोकिलकूजितं मत्तमयूरनटाटोपं पक्षिकुलैर्व्याप्तम् ॥ १९ ॥ एवंभूतमाश्रमं प्रविष्टो वायुः कामं प्रदीपयन् ववौ ॥ २० ॥ तत्र वसंतः प्रवालस्तबकादिभिर्गोपद्रुमलताजालैः पत्रपुष्पफलादिभिःप्रकटो बभूव ॥२१ ॥ तत्र कामश्च गीतावादित्रयुक्तैर्गंधर्वैरप्सरोभिश्चसहाऽदृश्यत ॥ २२ ॥ एवमिंद्रकिंकरास्तत्रासीनं मीलिताक्षमग्निमिव दुर्धर्षं मुनिं ददृशुः ॥ २३ ॥ तस्य पुरतः स्त्रियो ननृतुर्गंधर्वाः जगुः ॥ २४ ॥ कामो धनुषि शोषणदीपनसंमोहनतापनोन्मादनेति पंचमुखं बाणं संदधे। वसंतो लोभोऽन्ये चेन्द्रभृत्याः मुनेर्मनो व्यकंपयन् ॥ २५ ॥ तदैव

मत्तभ्रमरसंगीतं मत्तकोकिलकूजितम् ॥ मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥१९॥ वायुः प्रविष्ट आदाय हिम
निर्झरशीकरान् ॥ सुमनोभिः परिष्वक्तो ववावुत्तंभयन्स्मरम् ॥ २० ॥ उद्यच्चंद्रनिशावक्त्रः प्रवालस्तबकालिभिः ॥
गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः ॥ २१ ॥ अन्वीयमानो गंधर्वैर्गीतवादित्रयूथकैः ॥ अदृश्यतात्तचापेषुः स्वः
स्त्रीयूथपतिः स्मरः ॥ २२ ॥ हुत्वाग्निं समुपासीनं ददृशुः शक्रकिंकराः ॥ मीलिताक्षं दुराधर्षं मूर्तिमंतमिवानलम्
॥ २३ ॥ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ॥ मृदंगवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥ संदधेऽस्त्रं स्व
धनुषि कामः पंचमुखं तदा ॥ मधुर्मनो रजस्तोक इंद्रभृत्या व्यकंपयन् ॥ २५ ॥ क्रीडंत्याः पुञ्जिकस्थल्याः कंदुकैः
स्तनगौरवात ॥ भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥ २६ ॥ इतस्ततो भ्रमद्दृष्टेश्चलंत्या अनुकंदुकम् ॥
वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥२७॥ विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः ॥ सर्वं तत्राभवन्मोघम
नीशस्य यथोद्यमः ॥ २८ ॥ त इत्थमपकुर्वंतो मुनेस्तत्तेजसा मुने ॥ दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः
॥ २९ ॥ इतींद्रानुचरैर्ब्रह्मन्धर्षितोऽपि महामुनिः ॥ यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥ ३० ॥

कंदुकैः क्रीडमानायाः कंदुकमनुभ्रमद्दृष्टेरितस्ततश्चलंत्यास्तस्याः पुंजिकस्थल्याः सूक्ष्मं वस्त्रं वायुर्जहार ॥ २६ ॥ २७ ॥ तदा कामो मुनौ बाणं विससर्ज । तत्र सर्वमिदं व्यर्थमभवत् ॥ २८ ॥ ततः ऋषितेजसा दह्यमानाः कामाद्याः निववृतिरे ॥ २९ ॥ एवमिंद्रानुचरैर्धर्षितोऽपि महामुनि रहंकारस्य विकारं न प्राप ॥ ३० ॥

ततः इंद्रः सगणं कामं निस्तेजसं दृष्ट्वा ऋषेरनुभावं श्रुत्वा विस्मयं प्राप ॥ ३१ ॥ एवं तपःस्वाध्यायसंयमैश्चित्तं युंजतस्तस्यानुग्रहाय नरनारायणावृषी आविरास्ताम् ॥ ३२ ॥ तौ श्वेतकृष्णवर्णौ चतुर्भुजौ कृष्णाजिनवल्कलांबरौ पवित्रपाणी उपवीतदंडकमंडलुधरौ॥ ३३ ॥ पद्माक्षमालां दर्भमुष्टिं च दधानौ साक्षात्तपोरूपिणाविंद्रादिभिः पूजितौ ॥ ३४ ॥ नरनारायणावृषी दृष्ट्वोत्थाय तौ प्रति दंडवन्ननाम ॥ ३५ ॥ तद्दर्श

दृष्ट्वा निस्तेजसं कामं सगणं भगवान्स्वराट् ॥ श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥ ३१ ॥ तस्यैवं युंजतश्चित्तं तपःस्वाध्यायसंयमैः ॥अनुग्रहायाविरासीन्नरनारायणौ हरिः ॥३२॥ तौ शुक्लकृष्णौ नवकंजलोचनौ चतुर्भुजौ रौरववल्कलांबरौ ॥ पवित्रपाणी उपवीतकं त्रिवृत्कमंडलुं दंडमृजुं च वैणवम् ॥ ३३ ॥ पद्माक्षमालामुत जंतुमार्जनं वेदं च साक्षात्तप एव रूपिणौ ॥ तमत्तडिद्वर्णपिशंगरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥ ते वै भगवतो रूपे नरनारायणावृषी ॥ दृष्ट्वोत्थायादरेणोच्चैर्ननामांगेन दंडवत् ॥ ३५ ॥ स तत्संदर्शनानंदनिर्वृतात्मेंद्रियाशयः ॥ हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥ उत्थाय प्रांजलिः प्रह्व औत्सुक्यादाश्लिषन्निव ॥ नमोनम इतीशानौ बभाषे गद्गदाक्षरः ॥ ३७ ॥ तयोरासनमादाय पादयोरवनिज्य च ॥ अर्हणेनानुलेपेन धूपमाल्यैरपूजयत्॥ ३८ ॥ सुखमासनमासीनौ प्रसादाभिमुखौ मुनी ॥ पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥ मार्कंडेय उवाच ॥ किं वर्णये तव विभो यदुदीरितोऽसुः संस्पंदते तमनु वाङ्मनइन्द्रियाणि॥ स्पंदंति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबंधुः ॥ ४० ॥ मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ॥ नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥ ४१ ॥

नात्महृष्टरोमा ऋषिरश्रुपूर्णाक्षः सन् तावीक्षितु नाशक्नोत ॥ ३६ ॥ ततः उत्थाय प्रांजलिर्गद्गदाक्षरस्तौ नमोनम इति बभाषे॥ ३७ ॥ ततस्तयोरासनं दत्त्वा पादौ प्रक्षाल्य गंधपुष्पादिभिरपूजयत् ॥ ३८॥ पुनः सुखमासीनौ तौ प्रणम्य जगाद॥३९॥मार्कण्डेय उवाच ॥ हे विभो! अहं त्वां कथं स्तौमि यतस्त्वयैव प्रेरिताः प्राणेंद्रियादयश्चलंति । अतो न कस्यापि स्वाधीनस्त्वम् ॥ ४० ॥ हे भगवन् ! त्वमिमे मूर्ती त्रिलोक्याः पालनाय दुःखनिवृत्त्यै मोक्षाय च बिभर्षि तथा मत्स्यकूर्माद्यन्यतनूश्च ॥ ४१ ॥

किंच मुनयो ब्रह्मप्राप्तयेऽभीक्ष्णं यत् स्तुवंति नमंति यजंति तत् तव जगत्पालकस्यांघ्रिमूलं सेवे॥ ४२ ॥ हे मोक्षमूर्ते । तवांघ्रिपंकजं विना जनस्यान्यत्क्षेमं न विद्मः । ब्रह्मापि तव भ्रूविजृंभरूपात् कालादतिबिभेति अपरे किमुत ॥ ४३॥ हे भगवन् ! अतस्तुच्छं नश्वरं देहादिभजनं त्यक्त्वा सत्यज्ञानस्वरूपस्य तव पादमूलं भजामि ॥ ४४॥ हे श यद्यपि त्वयैव सत्त्वं रजस्तम इति ह्युत्पत्तिपालननाशहेतवो मायामयाः

तस्याखितुः स्थिरचरेजितुरंघ्रिमूलं यत्स्थ नकर्मगुणकालरजः स्पृशंति॥ यद्वै स्तुवंति निनमंति यजंत्यभीक्ष्णं ध्यायंति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२॥ नान्यं तवांघ्र्युपनयादपवर्गमूर्तेः क्षेमंजनस्यपरितो भियईशविद्मः॥ब्रह्माबिभेत्यलमतो द्विपरार्ध्यधिष्ण्यः कालस्य ते किमुततत्कृतभौतिकानाम्॥ ४३ ॥ तद्वैभजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य ॥ देहाद्यपार्थमसदंत्यमभिज्ञमात्रं विंदेत ते तर्हि सर्वमनीषितार्थम्॥ ४४ ॥सत्त्वं रजस्तम इतीश तवात्मबंधोमायामयाः स्थितिलयोदयहेतवोऽस्य॥लीला धृता यदपि सत्त्वमयी प्रशांत्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम्॥४५ ॥तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजंति॥यत्सात्वताः पुरुषरूपमुशंतिसत्त्वं लोकोयतोऽभयमुतात्मसुखं न चाऽन्यत्॥४६॥तस्मैनमोभगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै॥नारायणाय ऋषये च नरोत्तमायहंसाय संयतगिरेनिगमेश्वराय ॥४७॥ यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः संतं स्वखेष्वसुषु हृद्यपि दृक्पथेषु॥तन्माययाऽऽवृतमतिःस उ एव साक्षादाद्यश्च तेऽखिलगुरोरुपसाद्य वेदम्॥४८॥

लीलाः धृताः । तथाऽपि या सत्त्वमयी मूर्तिः सैव मोक्षाय नान्या ॥ ४५ ॥ हे भगवन् ! ज्ञानिनस्तव नरनारायणाख्यां तनुं भजंति। यतो भक्ताः सत्त्वमेव पुरुषस्य रूपं मन्यन्ते न रजस्तमश्च ॥ ४६ ॥ अतो हे ईश ! पुरुषाय विश्वगुरवेनारायणाय ऋषये शुद्धाय वेदमार्गप्रवर्त्तकाय तस्मै नमोऽस्तु ॥ ४७ ॥ किंच कपटेंद्रियमार्गैर्भ्रमबुद्धिः पुमान् स्वस्येंद्रियादिषु स्थितमपि त्वां न वेद ॥ ४८ ॥

१ तदहं भजामीति तृतीयेनानुषंगः। २ द्विपरार्धं स्थानं यस्य सः । ३ स्वात्मावरकम् । ४ ब्रह्मरुद्रमूर्तौ । ५ तव शुक्लां तनुं नारायणाख्यां तावकानां च नराख्याम् ।६ वैकुंठाख्यः। ७पूर्वमविद्वानेव। ८ वेदमुपसाद्य त्वां साक्षाद्वेदेत्यर्थः ।

ब्रह्मादिकवयोऽपि सांख्ययोगादिभिर्यत्नशीलास्त्वयि ति । एवंभूतं महापुरुषं त्वामहं वंदे ॥४९॥इति श्रीभागवते द्वादशस्कन्धे टी० अष्टमोऽध्यायः ॥ ८ ॥ नवमे भगवन्मायादिदृक्षोर्दर्शनं मुहुः ॥ मायाशिशोर्लयाब्धौ च मुनिर्निर्वेशनिर्गमैः ॥ १ ॥सूत उवाच॥इत्थं मार्कंडेयेन संस्तुतो नरसखो नारायणः प्रीतः सन् ऋषिमाह ॥१॥श्रीभगवानुवाच ॥भोभो ब्रह्मर्षिवर्य ! त्वं तपःस्वाध्यायसंयमैर्मयि भक्त्या च सिद्धोऽसि॥२॥

यद्दर्शनं निगम आत्मरहःप्रकाशं[1] मुह्यंति यत्र कवयोऽजपरा[2] यतंतः ॥ तं सर्ववादविषयप्रतिरूपशीलं[3] वंदे महापुरुषमात्मनिगूढबोधम् ॥ ४९ ॥ इति श्रीभा० महा० द्वादश० मार्कंडेयोपाख्याने नरनारायणस्तुतिर्नामाऽष्टमोऽध्यायः ॥ ८ ॥ सूत उवाच ॥ संस्तुतो भगवानित्थं मार्कंडेयेन धीमता ॥ नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥१॥श्रीभगवानुवाच ॥ भोभो ब्रह्मर्षिवर्योऽसि सिद्ध आत्मसमाधिना ॥ मयि भक्त्यानपायिन्या तपःस्वाध्यायसंयमैः ॥ २ ॥ वयं ते परितुष्टाः स्म तद्बृहद्व्रतचर्यया ॥ वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३॥ ऋषिरुवाच ॥ जितं ते देव देवेश प्रपन्नार्तिहराच्युत ॥ वरेणैतावताऽलं नो यद्भवान्समदृश्यत ॥ ४ ॥ गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम् ॥ मनसा योगपक्वेन स भवान्मेऽक्षिगोचरः ॥५॥ अथाप्यंबुजपत्राक्ष पुण्यश्लोकशिखामणे ॥ द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम्[4] ॥ ६ ॥ सूत उवाच ॥ इतीडितोऽर्चितः काममृषिणा भगवान् मुने ॥ तथेति स स्मयन्प्रागाद्बदर्याश्रममीश्वरः ॥ ७ ॥ तमेव चिंतयन्नर्थमृषिः स्वाश्रम एव सः ॥ वसन्नग्न्यर्कसोमांबुभूवायुवियदात्मसु ॥ ८ ॥

वयं तव तुष्टाः स्म । तव भद्रमस्त्वीप्सितं वरं वरय ॥ ३ ॥ मार्कंडेय उवाच॥ हे अच्युत ! यद्भवान् समदृश्यत स एव वरः॥४॥ब्रह्मादयोऽपि मनसा यस्य पादांबुजदर्शनमिच्छंति स भवान् मेऽक्षिगोचरोऽन्यवरेण किम् ॥ ५॥ अथापि हे कमलनेत्र ! त्वन्मायां द्रष्टुमिच्छामि ॥ ६॥ सूत उवाच ॥ईश्वरस्तथेत्युक्त्वा ऋषिणा पूजितो बदर्याश्रममगात ॥ ७ ॥ ततः ऋषिस्तमेव मायादर्शनरूपमर्थं चिंतयन् स्वाश्रम एव वसन् ॥ ८ ॥

१ तव रहस्यप्रकाशम् । २ ब्रह्ममुख्याः । ३ सांख्यादिवादिनां वादविषयाः भेदादयस्तदनुसारि शीलं स्वभावो यस्य । ४ सति वस्तुनि भेदम् ।

सर्वत्र हरिं ध्यायन् मनोमयैर्द्रव्यैस्तमपूजयत् कदाचित् प्रेमव्याप्तः सन् पूजां विसस्मार ॥९॥ हे शौनक ! एकदा पुष्पभद्रातटे तस्योपासीनस्य सतः संध्यायां महान् वायुरभूत् ॥ १० ॥ तमनु मेघास्तडिद्भिः सहिताः उच्चैर्गर्जंतो वर्षधाराः मुमुचुः ॥ ११ ॥ ततश्चतुःसमुद्राः लहरीभिर्भूतलं ग्रसंतः उग्रनक्रावर्त्तगंभीरघोषाः व्यदृश्यंत ॥ १२ ॥ ततः आत्मना सह चतुर्विधं भीतं जगद् तथा जलाप्लुतां क्ष्मां च वीक्ष्य मुनिरत्रसत् ॥ १३ ॥

ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् ॥ कचित्पूजां विसस्मार प्रेमप्रसरसंप्लुतः ॥ ९ ॥ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुने ॥ उपासीनस्य संध्यायां ब्रह्मन् वायुरभून्महान् ॥ १० ॥ तं चण्डशब्दं समुदीरयंतं बलाहका अन्वभवन्कराला: ॥ अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनंत उच्चैरभि वर्षधाराः ॥ ११ ॥ ततो व्यदृश्यंत चतुःसमुद्राः समंततः क्ष्मातलमाग्रसंतः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्त्तगभीरघोषाः ॥ १२ ॥ अंतर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् ॥ चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥ तस्यैवमुद्वीक्षत उर्मिभीषणः प्रभंजनाघूर्णितवार्महार्णवः ॥ आपूर्यमाणो वरषद्भिरंबुदैः क्ष्मामप्यधाद् द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥ सक्ष्मातरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ॥ स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडांधवत् ॥ १५ ॥ क्षुत्तृट्परीतैर्मकरैस्तिमिंगिलैरुपद्रुतो वीचिनभस्वताहतः ॥ तमस्यपारे पतितो भ्रमन्दिशो न वेद खं गां च परिश्रमेषितः ॥ १६ ॥ कचिद्गतो महावर्त्ते तरंगैस्ताडितः कचित् ॥ यादोभिर्भक्ष्यते कापि स्वयमन्योऽन्यघातिभिः ॥ १७ ॥

तदा वायुनाघूर्णितजलः ऊर्मिभीषणः समुद्रो द्वीपवर्षाद्रिभिः सह क्ष्मां छादयामास ॥ १४ ॥ ततस्त्रैलोक्यं सर्वं जलाप्लुतमासीत् । स मुनिरेक एवोर्वरितो जटाः विकीर्य जडांधवद्भ्राम ॥ १५ ॥ अपारे तमसि पतितो भ्रमन् मत्स्यमकरादिभिरुपद्रुतः स खं गां दिशश्च न वेद ॥ १६ ॥ कचित् जलभ्रमे गतः । कचित् तद्भक्षणाय परस्परं युध्यद्भिर्जलचरैर्भक्ष्यते ॥ १७ ॥

१ अतिक्रांता चौर्यामिः । २ सूर्यरश्मिभिर्वायुभिर्वेति शषः । ३ दौर्वत्यमाषर्म् । ४ जरायुजादिभेदेन । ५ ज्योतिर्गणसहितम् । ६ परिश्रमं परिगतः ।

क्वचिच्छोकं क्वचिन्मोहं क्वचित्सुखं दुःखचेतनां च प्राप्नोति ॥ १८ ॥ एवं तत्र भ्रमतोऽयुतायुतवर्षाणि व्यतीयुः ॥ १९ ॥ स कदाचित्तत्र भ्रमन्पृथिव्याः उच्चदेशे कोमलं वटवृक्षं ददर्श ॥ २० ॥ तस्यैशानदिक्छाखापत्रपुटे शयानं स्वप्रभया तमो ग्रसंतम् ॥ २१॥ श्यामं कम्बुग्रीवं विशालवक्षसं सुनासं सुंदरभ्रुवम् ॥ २२ ॥ कर्णयोर्दाडिमपुष्पधारिणं रक्ताधरोष्ठकांत्या किंचिच्छोणायितस्मितम् ॥ २३ ॥ ईषदरुणनेत्रप्रांतं हृद्य

क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम्। क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः॥१८॥ अयुतायुतवर्षाणां सहस्राणि शतानि च ॥ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः ॥१९॥ सकदाचिद्भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः॥ न्यग्रोधपोतं ददृशे फलपल्लवशोभितम्॥२०॥ प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम्॥ शयानं पर्णपुटके ग्रसंतं प्रभया तमः ॥२१॥ महामरकतश्यामं श्रीमद्वदनपंकजम्॥ कंबुग्रीवं महोरस्कं सुनासं सुंदरभ्रुवम्॥२२॥ श्वासैजदलकाभातं कंबुश्रीकर्णदाडिमम् ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥ पद्मगर्भारुणापांगं हृद्यहासावलोकनम् ॥ श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम्॥ २४ ॥ चार्वंगुलिभ्यां पाणिभ्यामुन्नीयचरणांबुजम् ॥ मुखेनिधाय विप्रेन्द्रो धयंतं वीक्ष्य विस्मितः ॥ २५ ॥ तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनांबुजः ॥ प्रहृष्टरोमाद्भुतभावशंकितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥२६॥ तावच्छिशोर्वै श्वसितेन भार्गव सोंऽतःशरीरं मशको यथाऽविशत ॥ तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥ खं रोदसी भगणानद्रिसागरान्द्वीपान्सवर्षान्ककुभः सुरासुरान् ॥ वनानि देशान्सरितः पुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥

हासावलोकनं निम्ननाभिम् ॥ २४ ॥ हस्ताभ्यां चरणांगुष्ठं मुखे निधाय चुम्बन्तं बालं मुकुन्दं वीक्ष्य ॥ २५ ॥ तद्दर्शनाद्गतश्रमः प्रहृष्टरोमा मार्कंडेयस्तं बालं प्रष्टुमग्रतो जगाम ॥ २६ ॥ तावच्छिशोः श्वसितेन मशक इव तदंतराविशत्तदुदरे गतः सन् पूर्ववत्सर्वम् ॥ २७ ॥ खं भूर्भगणाद्रिसागरान्द्वीपखंडदिशा देवासुरान्वनदेशादीन् ॥ २८ ॥

---

१ श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यङ् निम्नरेखास्ताभिः संविग्ना चञ्चला निम्ना गम्भीरा नाभिर्यस्मिंस्तत् ।

महाभूतानि भौतिकानि कालमन्यद्व्यवहारम् ॥२९॥हिमालयं पुष्पभद्रां नदीं निजाश्रममृषींश्च दृष्ट्वा विस्मितः आस । एतद्यत्र शिशोः श्वासा द्बहिर्निर्गतः सन् प्रलयाब्धावपतत् ॥ ३० ॥ पुनः पृथिव्याः उन्नतदेशे वटं तत्पत्रपुटे शयानं बालं च वीक्ष्य बालेन निरीक्षितः सन् ॥ ३१ ॥ नेत्राभ्यां हृदि रूपं संस्थाप्य तमधोक्षजमालिंगितुमभ्ययात् ॥ ३२ ॥ तावत्सर्वगुहाशयो भगवानंतर्दधे ॥ ३३ ॥ तत्पश्चाद्वटः सलिलं लोकप्रलयश्च सद्योऽन्तर्हितः मुनिश्च स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे चू० नवमोऽध्यायः ॥ ९ ॥ दशमे शिवा

महांति भूतान्यथ भौतिकान्यसौ कालं च नानायुतकल्पकल्पनम् ॥ यत्किंचिदन्यद्व्यवहारकारणं ददर्श विश्वं स दिवावभासितम् ॥ २९ ॥ हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीनपश्यत्॥ विश्वं विपश्यन् श्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥ तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ॥ तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपांगनिरीक्षणेन ॥३१॥ अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि॥अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥ तावत्स भगवान् साक्षाद्योगाधीशो गुहाशयः ॥ अंतर्दध ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥ तमन्वथ वटो ब्रह्मन् सलिलं लोकसंप्लवः ॥ तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥ इति श्रीभागवते महापुराणे द्वादशस्कंधे वटपत्रे शिशुदर्शनं नाम नवमोऽध्यायः ॥ ९ ॥ सूत उवाच ॥ स एवमनुभूयेदं नारायणविनिर्मितम् ॥ वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥ मार्कंडेय उवाच ॥ प्रपन्नोऽस्म्यंघ्रिमूलं ते प्रपन्नाभयदं हरे ॥ यन्माययाऽपि विबुधा मुह्यंति ज्ञानकाशया ॥ २ ॥ सूत उवाच ॥ तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ॥ रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥३॥

आगत्य मुनेस्तुष्टो वरानदात् ॥ तेन साकमतिप्रीत्या समाभाष्यासभाजयत् ॥ १ ॥ सूत उवाच ॥ स ऋषिरेवं नारायणनिर्मितं योगमायावैभवं दृष्ट्वा तमेव शरणं ययौ ॥ १ ॥ मार्कंडेय उवाच ॥ हे हरे ! शरणागतभयदूरकरं ते अंघ्रिमूलं शरणं गतोस्मि । यन्मायया ज्ञानिनोऽपि मुह्यंति ॥ २ ॥ सूत उवाच ॥ एकदा रुद्रः पार्वत्या स्वगणैश्च वृतो वृषेण दिवि पर्यटंस्तं ददर्श ॥ ३ ॥

अथोमा तमृषिं मार्कंडेयं वीक्ष्य शिवमभाषत। हे शिव ! समाहितेंद्रियमनसमेनं तपस्विनं विप्रं पश्यपश्य ॥ ४ ॥ भवान् सिद्धिदोऽस्य तपसः सिद्धिं त्वं कुरु ॥ ५ ॥ श्रीशिव उवाच ॥ हे देवि ! अयमृषिर्भगवति परां भक्तिं प्राप्तोऽत आशिषो मोक्षमपि नेच्छति ॥ ६ ॥ तथापि नृणां साधुसमागमः परो लाभः एतेन सह संवादं करिष्यामः ॥ ७ ॥ सूत उवाच ॥ इत्युक्त्वा सर्वविद्यानामीश्वरः शिवस्तत्समीपं ययौ ॥ ८ ॥ तदा ऋषिः समाधिस्थः सन् तयोरागमनं न वेद ॥ ९ ॥ तज्ज्ञात्वा शिवस्तद्धृदयाकाशमाविशत् वायुश्छिद्रमिव ॥ १० ॥ तदा मुनिरात्मनि

अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ॥ पश्येमं भगवन् विप्रं निभृतात्मेंद्रियाशयम् ॥ ४ ॥ निभृतोदझषव्रातं वातापाये यथार्णवम् ॥ कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥ श्रीभगवानुवाच ॥ नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥ अथापि संवदिष्यामो भवान्येतेन साधुना ॥ अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥ सूत उवाच ॥ इत्युक्त्वा तमुपेयाय भगवान् सात्वतां पतिः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥ तयोरागमनं साक्षादीशयोर्जगदात्मनोः ॥ न वेदरुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥ भगवांस्तदभिज्ञाय गिरिशो योगमायया ॥ आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥ आत्मन्यपि शिवं प्राप्तं तडित्पिंगजटाधरम् ॥ त्र्यक्षं दशभुजं प्रांशुमुद्यंतमिव भास्करम् ॥ ११ ॥ व्याघ्रचर्मांबरं शूलधनुरिष्वसिचर्मभिः ॥ अक्षमालाडमरुककपालपरशुं सह ॥ बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः ॥ १२ ॥ किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम् ॥ १३ ॥ रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥ तस्मै सपर्यां व्यदधात् सगणाय सहोमया ॥ स्वागतासनपाद्यार्घगंधस्रग्धूपदीपकैः ॥ १४ ॥

प्राप्तं त्रिनेत्रं दशभुजं पिंगजटाधरम् ॥ ११ ॥ व्याघ्रचर्मांबरं शूलधनुरिष्वसिचर्माक्षमालाडमरुकपालपरशून् दधानं शिवं हृदि वीक्ष्य विस्मितोऽभवत् ॥ १२ ॥ इदं किं कुत एवेति समाधेर्विरतः सन् नेत्रे उन्मील्य उमया गणैश्च युतं शिवं दृष्ट्वा ॥ १३ ॥ शिरसा ननाम । ततः सहोमया सगणाय तस्मै अर्घपाद्यादिभिः पूजां चकार ॥ १४ ॥

आह च हे विभो ! पूर्णकामस्य ते किं करवाम ॥ १५ ॥ तुभ्यं शिवाय शांताय सत्त्वाय नम इत्यस्तौत् ॥ १६ ॥ सूत उवाच ॥ एवं स्तुतः शिवस्तुष्टः सन् प्रहस्य तमृषिमाह ॥ १७ ॥ श्रीशिव उवाच । हे ऋषे ! ईप्सितं वरं वृणु । वरं दातुं वयं त्रयः । येषां दर्शनं सफलम् ॥ १८ ॥ एवमुक्त्वा ब्राह्मणान् स्तौति । हे मुने ! ये ब्राह्मणाः साधवोऽस्मास्वेकांतभक्ताः निर्वैराश्च तान्निंद्रादिलोकपालाः अहं ब्रह्मा हरिश्चैते वंदंतेऽर्चंत्यु

आह चात्मानुभावेन पूर्णकामस्य ते विभो ॥ करवाम किमीशान येनेदं निर्वृतं जगत् ॥१५॥नमः शिवाय शांताय सत्त्वाय प्रमृडाय च ॥ रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे ॥ १६॥ सूत उवाच ॥ एवं स्तुतःस भगवानादिदेवः सतां गतिः ॥ परितुष्टः प्रसन्नात्मा प्रहसंतमभाषत ॥ १७ ॥ श्रीभगवानुवाच ॥ वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ॥ अमोघं दर्शनं येषां मर्त्यो यद्विंदतेऽमृतम् ॥१८॥ब्राह्मणाः साधवः शांता निःसंगा भूतवत्सलाः॥ एकांतभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ १९ ॥ सलोका लोकपालास्तान् वंदंत्यर्चंत्युपासते ॥ अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः ॥ २० ॥ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ॥ नात्मनश्च जनस्यापि तद्युष्मान् वयमीमहि ॥ ॥ २१ ॥ न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः ॥ ते पुनंत्युरुकालेन यूयं दर्शनमात्रतः ॥ २२ ॥ ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥ २३ ॥ श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः ॥ शुध्येरन्नंत्यजाश्चापि किमु संभाषणादिभिः ॥ २४ ॥

पासते च ॥ १९ ॥ २० ॥ एवंभूताः ये साधवस्तं मय्यच्युतेऽजे चाण्वपि भेदं न पश्यंति । अतो युष्मान् भजेम ॥ २१ ॥ देवतीर्थानि कालेन पुनंति यूयं दर्शनमात्रतः ॥ २२ ॥ अत एव ब्राह्मणेभ्यो नमस्यामो ये तपआदिभिरस्मद्रूपं धारयंति ॥ २३॥ यषां श्रवणाद्दर्शनात् पातकिनोपि शुद्धयेरन् तेषां संभाषणादिभिः शुध्यंतीति पुनः किं वक्तव्यम् ॥ २४ ॥

१ येभ्यः । २ आत्मसमाधानं चित्तैकाग्र्यम् । तपः आलोचनम् । स्वाध्यायोऽध्ययनम् । संयमो बाह्येंद्रियनिग्रहः ।

सूत उवाच ॥ एवं शिववचः शृण्वन्नपि ऋषिर्नातृप्यत् ॥२५॥ स विष्णोर्मायया भ्रमितः शिवस्य वाक्यामृतेन क्लेशहीनः सन् तमाह ॥२६॥ मार्कंडेय उवाच ॥ अहो इयमीश्वरलीलया दुर्विभाव्या । यतः ईश्वरा अपि स्वनिर्मितानि नमंति भूतानि स्तुवंति ॥ २७ ॥ धर्मप्रवक्तारोऽपि देहिनां धर्मं ग्राहयितुं स्वयमाचरंति ॥ २८ ॥ एतावता भगवतस्तव प्रभावो न दुष्येत मायिनः कपटं यथा ॥ २९ ॥ मनसेदं विश्वं सृष्ट्वा गुणैः

सूत उवाच ॥ इति चंद्रललामस्य धर्मगुह्योपबृंहितम् ॥ वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥ २५ ॥ स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् ॥ शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत् ॥२६॥ ऋषिरुवाच ॥ अहो ईश्वर लीलेयं दुर्विभाव्या शरीरिणाम् ॥ यन्नमन्तीशितव्यानि स्तुवंति जगदीश्वराः ॥ २७ ॥ धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ॥ आचरंत्यनुमोदंते क्रियमाणं स्तुवंति च ॥ २८ ॥ नैतावता भगवतः स्वमायामयवृत्तिभिः ॥ न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥ २९ ॥ सृष्ट्वेदं मनसा विश्वमात्मनानुप्रविश्य यः ॥ गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा ॥३०॥ तस्मै नमो भगवते त्रिगुणाय गुणात्मने ॥ केवलायाऽद्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३१ ॥ कं वृणे नु परं भूमन् वरं त्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामः सत्यकामः पुमान्भवेत् ॥ ३२ ॥ वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात् ॥ भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि॥३३॥ सूत उवाच ॥ इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा ॥ तमाह भगवान्शर्वः शर्वया चाभिनंदितः ॥ ३४ ॥ कामस्तेऽयं महर्षेऽस्तु भक्तिमांस्त्वमधोक्षजे ॥ आ कल्पांताद्यशः पुण्यमजरामरता तथा ॥ ३५ ॥ ज्ञानं त्रैकालिकं ब्रह्मन्विज्ञानं च विरक्तिमत् ॥ ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यताऽस्तु ते ॥ ३६ ॥

प्रविष्टो भाति ॥ ३० ॥ हे ईश ! एवंभूताय त्रिगुणाय ब्रह्ममूर्तये तुभ्यं गुरवे नमोऽस्तु ॥ ३१ ॥ किंच हे भगवन् ! वरददर्शनात्त्वत्तः कं वरं वृणे ॥३२॥ तथापि भगवति त्वयि साधुषु च भक्तिर्भवेत् एवं वरं वृणे ॥ ३३ ॥ सूत उवाच ॥ एवं मुनिना स्तुतः शिवः ऋषिमाह ॥ ३४ ॥ हे मार्कंडेय ! अयं ते मनोरथोऽस्तु । कल्पपर्यंतं यशस्तथाऽजरामरता त्रैकालिकं ज्ञानं वैराग्यं विज्ञानं पुराणाचार्यता च तेऽस्तु ॥३५॥ ३६ ॥

सूत उवाच ॥ शौनक ! एवं वरान्दत्त्वा तत्प्रतापं देव्यै कथयञ्शिवोऽगात् ॥३७॥ ततः ऋषिर्हरावेकांततां गतः सन्नधुनाऽपि विचरति ॥ ३८ ॥
हे शौनक ! एतन्मार्कंडेयस्य चरितं भगवतो मायावैभवं तेऽनुवर्णितम् ॥ ३९ ॥ एतन्मार्कंडेयचरितं भगवन्मायावैभवमज्ञाः अनित्यं प्रचक्षते ।
वस्तुतस्तु भगवल्लीलात्वेन नित्यमित्यर्थः । किं च शिशोः श्वासोच्छ्वासाभ्यां सप्तवारं तदुदरप्रवेशनिर्गमतः क्षणमात्रेणैव सप्तकल्पानुभव इति न
कश्चिद्विरोधः ॥ ४० ॥ एतदाख्यानं यः शृणुयाच्छ्रावयेत्तयोः संसृतिर्न भवेत् ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे चूर्णिकायां

सूत उवाच ॥ एवं वरान्स मुनये दत्त्वाऽगात्त्र्यक्ष ईश्वरः ॥ देव्यै तत्कर्म कथयन्ननुभूतं पुरामुना ॥ ३७ ॥ सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ॥ विचरत्यधुनाप्यद्धा हरावेकांततां गतः ॥३८॥ अनुवर्णितमेतत्ते मार्कंडेयस्य धीमतः अनुभूतं भगवतो मायावैभवमद्भुतम् ॥३९॥ एतत्केचिदविद्वांसो मायासंसृतिमात्मनः ॥ अनाद्यावार्तितं नृणां कादाचित्कं प्रचक्षते ॥ ४० ॥ य एवमेतद् भृगुवर्य वर्णितं रथांगपाणेरनुभावभावितम् ॥ संश्रावयेत्संशृणुयादुतावुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे मार्कंडेय० शिवदत्तवरदानं० दशमोऽध्यायः ॥ १० ॥ शौनक उवाच ॥ अथेममर्थं पृच्छामो भवंतं बहुवित्तमम् ॥ समस्ततन्त्रराद्धांते भवान्भागवततत्त्ववित् ॥१॥ तांत्रिकाः परिचर्यायां केवलस्य श्रियः पतेः ॥ अंगोपांगायुधाकल्पं कल्पयंति यथैव यः ॥ २ ॥ तन्नो वर्णय भद्रं ते क्रियायोग बुभुत्सताम् ॥ येन क्रियानैपुर्णेन मर्त्या यायादमर्त्यताम् ॥ ३ ॥ सूत उवाच ॥ नमस्कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि ॥ याः प्रोक्ता वेदतंत्राभ्यामाचार्यैः पद्मजादिभिः ॥ ४ ॥

दशमोऽध्यायः ॥१०॥ एकादशे तु पूजार्थं महापुरुषवर्णनम् ॥ स्वेव्यूहस्य चाख्यानं प्रतिमासं पृथक्पृथक् ॥ १ ॥ येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः ॥ तं पृच्छति क्रियायोगं सांगोपांगादिकल्पितम् ॥ २ ॥ शौनक उवाच ॥ हे सूत ! अथ त्वामिममेवार्थं पृच्छामः ॥ १ ॥ तंत्रविदः पुरुषाः श्रियःपतेरुपासनायां विषयेगानि पादादीन्युपांगानि गरुडादीन्यायुधानि सुदर्शनादीन्याकल्पान्कौस्तुभादीन्यथा येस्तत्त्वैः कल्पयंति ॥ २ ॥ तन्नो वर्णय । तव भद्रमस्तु । येन पूजायोगेन मर्त्यो मोक्षं प्राप्नोति ॥ ३ ॥ सूत उवाच ॥ शौनक ! गुरुं नमस्कृत्य वैष्णवीर्विभूतीर्वक्ष्ये ॥४॥

मायाद्यैर्नवभिस्तत्त्वैः षोडशविकारात्मको विराड् निर्मितो यत्रेदं त्रिभुवनं दृश्यते॥ ५ ॥एतत्पौरुषं रूपं जानीयात्। अस्यांगकल्पनामाह। भूः पादौ स्वर्गः शिरो नभो नाभिः सूर्योऽक्षिणी वायुर्नासे दिशः कर्णौ ॥ ६ ॥ उपस्थं प्रजापतिः। मृत्युर्गुदम्। लोकपालाः बाहवः[1]। चंद्रो मनः यमो भ्रुवौ ॥ ७ ॥ ऊर्ध्वोष्ठो लज्जा। लोभोऽधरोष्ठः। ज्योत्स्ना दंताः। भ्रमो हास्यम्। वृक्षा रोमाणि। मेघाः केशाः ॥ ८ ॥ यावानयं सप्तवितस्तिमितः पुमांस्तावानसौ प्रोक्तः ॥ ९ ॥ किंच कौस्तुभमिषेण भगवान् शुद्धचैतन्यं बिभर्ति। कौस्तुभप्रभैव श्रीवत्सं बिभर्ति। स्वमायां

मायाद्यैर्नवभिस्तत्त्वैः स विकारमयो विराट् ॥निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥५ ॥ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः॥ नाभिः सूर्योक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥६ ॥प्रजापतिः प्रजननमपानो मृत्युरीशितुः ॥ तद्बाहवो लोकपाला मनश्चंद्रो भ्रुवौ यमः ॥७॥लज्जोत्तरोऽधरो लोभो दंता ज्योत्स्ना स्मयो भ्रमः॥ रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्द्धजाः॥ ८॥ यावानयं वै पुरुषो यावत्या संस्थया मितः ॥ तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥ कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभा व्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः॥ १०॥ स्वमायां वनमालाख्यां नानागुणमयीं दधत् ॥वासश्छंदोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम्॥ ११॥बिभर्ति सांख्यं योगं च देवो मकरकुंडले ॥ मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम्॥ १२॥ अव्याकृतमनंताख्यमासनं यदधिष्ठितः ॥ धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते॥१३॥ ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत् ॥ अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥ १४ ॥ नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् ॥ कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ १५ ॥

वनमालां बिभर्ति। छंदोमयं पीतांबरं बि०। प्रणवरूपं यज्ञोपवीतं बि० ॥ १०॥ ११ ॥ सांख्ययोगरूपे कुंडले बि०। ब्रह्मलोकं कुटुम्बं बि० ॥ १२ ॥ प्रधानतत्त्वं शेषाख्यमासनं बि०। सत्त्वगुणाख्यं पद्मं बि० ॥ १३ ॥ प्राणतत्त्वं गदां दधत्। जलतत्त्वं शंखं बि०। तेजस्तत्त्वं सुदर्शनं बि० ॥ १४ ॥ आकाशतत्त्वमसिं बि०। तमोमयं चर्म बि०। कालरूपं धनुः बि०। कर्ममयं तूणीरं बि० ॥ १५ ॥

१ चेतनाधिष्ठिते। २ अवयवसंनिवेशन।

इंद्रियाणि शरान् बि० । क्रीडायुक्तं मनस्तस्य रथं शब्दादीन् रथप्रकटरूपं बि० ॥ १६॥ देवपूजाभूमिं सूर्यमंडलं बि० । मंत्रदीक्षामात्मपूजां बि० ॥ १७ ॥ षड्गुणैश्वर्यं लीलापद्मं बि० । धर्मं चामरं यशो व्यंजनं बि० ॥ १८ ॥ छत्रं वैकुंठं वेदत्रयरूपं गरुडं वाहनं बि० ॥१९॥ भगवच्छक्तिं श्रियं पंचरात्राद्यागमरूपं विष्वक्सेनं पार्षदं बि० । अणिमाद्याः अष्टगुणास्ते नंदसुनंदाद्याः द्वारपालाः ॥ २०॥ वासुदेवः संकर्षणःप्रद्युम्नोऽनि

इंद्रियाणि शरानाहुराकूतीरस्य स्यंदनम् ॥ तन्मात्राण्यस्याभिव्यक्तिं मुद्रयार्थक्रियात्मताम् ॥ १६॥ मंडलं देवयजनं दीक्षा संस्कार आत्मनः ॥ परिचर्या भगवत आत्मनो दुरितक्षयः ॥ १७ ॥ भगवान्भगशब्दार्थं लीलाकमलमुद्वहन् ॥ धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥ १८ ॥ आतपत्रं तु वैकुंठं द्विजा धाम कुतोभयम् ॥ त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥ १९ ॥ अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ॥ विष्वक्सेनस्तंत्रमूर्तिर्विदितः पार्षदाधिपः ॥ २० ॥ नंदादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम् ॥ अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥२१ ॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ॥ अर्थेंद्रियाशयज्ञानैर्भगवान्परिभाव्यते ॥ २२ ॥ अंगोपांगायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्ति स्म चतुर्मूर्तिर्भगवान्हरिरीश्वरः ॥२३ ॥ द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत् ॥ सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलक्ष्यः ॥ २४ ॥

रुद्धश्चेति मूर्तिभेदो ज्ञेयः ॥ २१ ॥ स एव चतुर्मूर्तिरीश्वरो विश्वतैजसप्राज्ञतुरीया इति वृत्तिभिः परिभाव्यते ॥ २२ ॥ अंगोपांगायुधाकल्पैरुपलक्षितो भगवान् वासुदेवादिचतुर्मूर्तिः सन् विश्वादिचतुष्टयं बिभर्ति॥२३॥ एवंभूतो वेदकारणं हरिः स्वमाययेदं विश्वं सृजति हरति पाति च ॥ २४ ॥

१ मुद्रया धृतया वरदाभयदादिरूपत्वम् । २ आत्मनो दुरितक्षयायेत्येवं भावयेदित्यर्थः । ३ पंचरात्राद्यागमरूपः । ४ ब्रह्मादिरूपया ऽऽख्यया ऽनाच्छन्नज्ञानः । ५ शास्त्रेषु भिन्नो न तु वस्तुतस्तथा ।

अतस्तं प्रार्थयते । हे कृष्ण ! हे अर्जुनसख ! अवनिद्रोहकर्तारो राजानः तेषां वंशदहनकर्तः हे गोविंद ! अस्मान् भृत्यान् पाहि ॥२५॥ इदं यः उषःकाले शुचिः सन् पठेत् स हृदिस्थं ब्रह्म पश्यति॥२६॥ शौनक उवाच॥ शुकः परीक्षिते सूर्यसंबंधी सप्तानां गणो मासिमासि नानासप्तको वसतीति यत्पंचमस्कन्ध आह ॥२७॥ तेषां नामानि कर्माणि नो ब्रूहि ॥ २८ ॥ सूत उवाच ॥ हे शौनक ! माययाऽयं सूर्यो लोकयात्राप्रवर्तको लोकेषु वर्तत ॥२९॥ स सृष्टिकर्ता हरिरेव। स च सर्ववेदक्रियामूलं सप्तेनोपाधिना ऋषिभिर्बहुधा वर्णितः॥ ३० ॥ स सूर्यो मायया कालः

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंद गोपवनिताव्रजभृत्यगीत तीर्थश्रवः श्रवणमंगल पाहि भृत्यान् ॥२५॥ य इदं कल्य उत्थाय महापुरुषलक्षणम् ॥ तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥ शौनक उवाच ॥ शुको यदाह भगवान्विष्णुराताय शृण्वते ॥ सौरो गणो मासिमासि नाना वसति सप्तकः ॥ २७ ॥ तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ॥ ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः॥२८॥सूत उवाच॥ अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ॥ निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्त्तते ॥ २९ ॥ एक एव हि लोकानां सूर्य आत्मादिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ३० ॥ कालो देशः क्रिया कर्ता कारणं कार्यमागमः ॥ द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजया हरिः ॥ ३१ ॥ मध्वादिषु द्वादशसु भगवान्कालरूपधृक् ॥लोकतंत्राय चरति पृथग्द्वादशभिर्गणैः॥३२॥धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने॥ पुलस्त्यस्तुंबुरुरिति मधुमासं नयन्त्यमी ॥ ३३ ॥ अर्यमा पुलहोऽथौजाः प्रहेतिः पुंजिकस्थली ॥ नारदः कच्छनीरश्च नयंत्येते स्म माधवम् ॥ ३४ ॥

प्रातरादिः १ देशः समादिः २ क्रियाऽनुष्ठानं ३ कर्ता ब्राह्मणादिः ४ करणं स्रुगादि ५ कार्यं यागादिः ६ आगमो मंत्रादिः ७ द्रव्यं व्रीह्यादिः ८ फलं स्वर्गादिः ९ एवं नवप्रकारेण वर्णितः॥३१॥कालस्वरूपधारी भगवांश्चैत्रादिमासेषु लोकयात्रानिर्वाहाय द्वादशभिर्गणैश्चरति॥३२॥तदेवाह। धाता सूर्यः । कृतस्थल्यप्सरसः । हेतिः राक्षसः । वासुकिर्नागः । रथकृद्यक्षः । पुलस्त्यः ऋषिः ।तुम्बुरुर्गंधर्वः। एते चैत्रमासमनुवर्तयंति ॥३३॥ अर्यमा सूर्यः । पुञ्जिकस्थली अ० । प्रहेतिः रा० । कच्छनीरः ना० । अथौजाः य० ।पुलहः ऋ०। नारदः गं०।एते वैशाखमासं वर्तयंति॥३४॥

मित्रः सू० । मेनका अ० । पौरुषेयः रा० । तक्षकः ना० । रथसेनः य० । अत्रिः ऋ० । हाहाः गं०। एते ज्येष्ठमासं नयंति॥३५॥वणः सु० रं
रंभा अ० । चित्रस्वनः रा० । शुक्रः ना० । सहजन्यः य० । वसिष्ठः ऋषिः। हूहूः गंध०। एते आषाढमासं वर्तयंति॥३६॥इन्द्रः सूर्यः ।प्रम्लो च
अ० । वर्यो रा० । एलापत्रः ना० । श्रोता य० ।अंगिराः ऋ०।विश्वावसुर्गं० । एते श्रावणमासमनुवर्तयंति॥३७॥विवस्वान् सूर्यः।अनुम्लोचा
अ० । व्याघ्रो रा० । शंखपालो ना० । आसारणो य० । भृगुर्ऋ० । उग्रसेनो गं० । एते भाद्रपदमासं वर्तयंति ॥ ३८ ॥ पूषा सू० । घृताच्यप्स
रसः । वातो राक्षसः । धनंजयो नागः । सुरुचिर्यक्षः । गोतमः ऋ० । सुषेणो गंधर्वः । एते माघमासं वर्तयंति ॥३९॥ पर्जन्यः सूर्यः।सेनजिद

मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ॥ रथस्वन इति ह्येते शुक्रमासं नयंत्यमी ॥ ३५ ॥ वसिष्ठो वरुणो रंभा सहजन्यस्तथा हुहूः ॥ शुक्रश्चित्रस्वनश्चैव शुचिमासं नयंत्यमी ॥३६॥ इंद्रो विश्वावसुः श्रोता एलापत्रस्तथांगिराः॥ प्रम्लोचा राक्षसो वर्यो नभोमासं नयंत्यमी ॥३७॥ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ॥ अनुम्लोचा शंखपालो नभस्याख्यं नयंत्यमी ॥ ३८ ॥ पूषा धनंजयो वातः सुषेणः सुरुचिस्तथा ॥ घृताची गोतमश्चेति तपोमासं नयंत्यमी ॥ ३९ ॥ ऋतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ॥ विश्व ऐरावतश्चैव तपस्याख्यं नयंत्यमी ॥ ४० ॥ अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखः सहोमासं नयंत्यमी॥४१॥ भगः स्फूर्जोरिष्टनेमि रूर्ण आयुश्च पंचमः ॥ कर्कोटकः पूर्वचित्तिः पुष्यमासं नयंत्यमी॥४२॥ त्वष्टा ऋचीकतनयः कंबलश्च तिलोत्तमा॥ ब्रह्मापेतोथ शतजिद् धृतराष्ट्र इषंभराः ॥ ४३ ॥

प्सरसः । वर्चाः राक्षसः ऐरावतो नागः । ऋतुर्यक्षः । भरद्वाजः ऋ० । विश्वो गंधर्वः । एते फाल्गुनमासं वर्तयंति ॥ ४० ॥ अंशुः सू० । उर्वशी
अ० । विद्युच्छत्रुः राक्षसः । महाशंखो नागः । तार्क्ष्यो यक्षः । कश्यपः ऋ० । ऋतसेनो गंधर्वः । एते मार्गशीर्षं वर्तयंति ॥४१ ॥ भगः सूर्यः ।
पूर्वचित्तिरप्सरसः । स्फूर्जो राक्षसः । कर्कोटको नागः । ऊर्णो यक्षः । आयुर्ऋषिः । अरिष्टनेमिर्गं० ॥ एते पौषं वर्तयंति ॥४२॥ त्वष्टा सूर्यः।
तिलोत्तमा अ० । ब्रह्मापेतो राक्षसः । कम्बलो ना० । शतजिद्यक्षः । जमदग्निर्ऋषिः । धृतराष्ट्रो गंधर्वः । एते आश्विनमासं वर्त्तयंति ॥ ४३ ॥

विष्णुः सूर्यः । रंभाऽप्सरस मखापेतो राक्षसः । अश्वतरो नागः । सत्यजिद् यक्षः विश्वामित्रः ऋषिः । सूर्यवर्चाः गंधर्वः । एते कार्तिकमनुवर्तयंति ॥ ४४ ॥ भगवत आदित्यस्य विभूतयः संध्ययोः स्मरतां नृणां पापं हरंति ॥४५॥ असौ सूर्यो द्वादशमासेषु चरन् जनस्य शुभां मतिं विस्तारयते ॥ ४६ ॥ ऋषयः एनं सूर्यं त्रिभिर्वेदैः स्तुवंति। गंधर्वाः गायंत्यप्सरसोऽग्रतो नृत्यंति॥४७॥नागाः रथबंधनरज्जवः । यक्षाः रथं योजयंति।राक्षसाः

विष्णुरश्वतरो रंभा सूर्यवर्चाश्च सत्यजित् ॥ विश्वामित्रो मखापेत ऊर्जमासं नयंत्यमी ॥ ४४ ॥ एता भगवतो विष्णोरादित्यस्य विभूतयः ॥ स्मरतां संध्ययोर्नृणां हरंत्यंहो दिनेदिने ॥४५॥ द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ॥ चरन्समंतात्तनुते परत्रेह च सन्मतिम् ॥ ४६ ॥ सामर्ग्यजुर्भिस्तल्लिंगैर्ऋषयः संस्तुवंत्यमुम् ॥ गंधर्वास्तं प्रगायंति नृत्यंत्यप्सरसोऽग्रतः ॥ ४७ ॥ उन्नह्यंति रथं नागा ग्रामण्यो रथयोजकाः ॥ चोदयंति रथं पृष्ठे नैर्ऋता बलशालिनः ॥ ४८ ॥ वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः॥पुरुतोभिमुखं यांति स्तुवंति स्तुतिभिर्विभुम् ॥ ४९ ॥ एवं ह्यनादिनिधनोभगवन्हरिरीश्वरः ॥ कल्पेकल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ॥५०॥ इति श्रीभा० म० द्वादश० आदित्यव्यूहविवरणं नामैकादशोऽध्यायः ॥ ११ ॥ सूतउवाच ॥ नमो धर्माय महते नमः कृष्णाय वेधसे ॥ ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्ये सनातनान् ॥१॥ एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ॥ भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २ ॥ अत्र संकीर्तितः साक्षात्सर्वपापहरो हरिः ॥ नारायणो हृषीकेशो भगवान्सात्वतां पतिः ॥ ३ ॥

पृष्ठतो रथं प्रेरयंति॥ ४८॥ अंगुष्ठपर्वप्रमाणाः वालखिल्याः षष्टिसहस्राण्यृषयः पुरुतोऽभिमुखं स्तुवंति॥४९॥हे शौनक। एवमनादिनिधनो हरिः कल्पेकल्पे स्वमात्मानं विभज्य लोकान् पालयति ॥५०॥ इति श्रीभागवते द्वादश ० चू० एकादशोऽध्यायः ॥ ११ ॥ द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः ॥ प्रथमस्कंधमारभ्य प्राधान्येन समासतः॥ १ ॥ सूत उवाच ॥ हे शौनक ! धर्माय कृष्णाय ब्राह्मणेभ्यश्च नमस्कृत्य सनातनान्धर्मान् वक्ष्ये ॥ १॥हे द्विजाः ! भवद्भिर्यत्पृष्टं विष्णोरद्भुतं चरितं तत्कथितम् ॥ २ ॥अत्र पुराणे सर्वपापहरो नारायणो हरिः कीर्तितः॥३॥

तथा परं ब्रह्म विज्ञानसहितंज्ञानंतत्साधनं च कथितम् ॥ ४ ॥ तथा भक्तियोगो वैराग्यं चोक्तम् अथ सर्वस्कंधानां प्रकरणार्थान् वक्ष्यति ।
तत्र प्रथमे पारीक्षितमाख्यानं ततो नारदाख्यानम् ॥ ५ ॥ राजर्षेर्विप्रशापाद्गंगायां प्रायोपवेशः । तत्र शुकपरीक्षित्संवादः ॥ ६ ॥ अथ द्वितीये
योगधारणयाग्निलोकादिगतिर्ब्रह्मनारदयोः संवादोऽवतारानुगीतं प्राधानिकः सर्गः ॥ ७ ॥ अथ तृतीये विदुरोद्धवसंवादो विदुरमैत्रेयसंवादः

अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम्[1]॥ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥४ ॥ भक्तियोगः समाख्यातो
वैराग्यं च तदाश्रयम् ॥ पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥ प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः ॥
शुकस्यैव च ब्रह्मर्षेः संवादश्च परीक्षितः ॥ ६ ॥ योगधारणयोत्क्रांतिः संवादो नारदाजयोः॥ अवतारानुगीतं च सर्गः
प्राधानिकोऽग्रतः ॥ ७ ॥ विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥ ततः
प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये ॥ ततो ब्रह्मांडसंभूतिर्वैराजः पुरुषो यतः ॥ ९ ॥ कालस्य स्थूलसूक्ष्मस्य गतिः
पद्मसमुद्भवः ॥ भुव उद्धरणेंऽम्भोधौ हिरण्याक्षवधो यथा ॥ १० ॥ ऊर्ध्वतिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च ॥ अर्धनारी
नरस्याथ यतःस्वायंभुवो मनुः ॥११ ॥ शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ॥ संतानो धर्मपत्नीनां कर्दमस्य
प्रजापतेः ॥ १२ ॥ अवतारो भगवतः कपिलस्य महात्मनः ॥ देवहूत्याश्च संवादः कपिलेन च धीमता ॥१३ ॥

पुराणसंहिताप्रश्नो महापुरुषस्य प्रलये तूष्णीमवस्थानम् ॥ ८ ॥ प्राकृतिकः सर्गो वैकृतिकः सर्गश्च । ततो ब्रह्मांडसंभवः ॥ ९ ॥ कालस्य
गतिः पद्मोत्पत्तिवराहावतारो हिरण्याक्षवधः ॥ १० ॥ ऊर्ध्वतिर्यगादिसर्गो रुद्रसर्गः स्वायंभुवमनोरुत्पत्तिः ॥ ११ ॥ कर्दमस्य चरितम् ।
कपिलावतारः कपिलदेवहूत्योः संवादः ॥ १२ ॥ १३ ॥



१ प्रभवत्यस्मादिति प्रभवम् । अप्यत्यस्मादित्यप्ययम् । २ तज्ज्ञानमुपाख्यायते यस्मात्तज्ज्ञानसाधनमित्यर्थः । ३ अस्मिन्द्वादशस्कंधे इति शेषः । ४ अचिरादिगतिः । ५ प्रधानकार्यविराड्रूपःसर्गः

चतुर्थे मरीच्यादिनवप्रजापतीनामुत्पत्तिः दक्षयज्ञनाशो ध्रुवस्य पृथोः प्राचीनबर्हिषश्चरितानि प्राचीनबर्हिर्नारदयोः संवादः ॥ १३ ॥ अथ पंचमे प्रियव्रताख्यानं नाभेर्ऋषभस्य भरतस्य च चरितम् ॥ १५ ॥ द्वीपखंडसमुद्रनद्यादिवर्णनम् । ज्योतिश्चक्रपातालनरकाणां वर्णनम् ॥१६॥ षष्ठस्कंधेऽजामिलोपाख्यानं प्रचेतोभ्यो दक्षजन्म तत्कन्यानां वंशो यतो देवाऽसुरनृतिर्यङ्नगखगादयो जाताः॥१७॥वृत्रस्य जन्म निधनम्।सप्तमे दितिपुत्रनाशः प्रह्लादस्य चरितं नृसिंहावतारो वर्णाश्रमानुवर्णनम् ॥ १८ ॥ अष्टमे मन्वंतरानुचरितं गजेंद्रमोक्षणं मन्वंतराऽवतारः ॥ १९ ॥

नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः ॥ १४ ॥ नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः ॥ नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥ १५ ॥ ततो द्वीपसमुद्राद्रिवर्षनद्युपवर्णनम् ॥ ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥१६॥ दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च संततिः ॥ यतोदेवासुरनरास्तिर्यङ्नगखगादयः ॥ १७ ॥ त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः॥दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ॥१८॥ मन्वंतरानुचरितं गजेंद्रस्य विमोक्षणम् ॥ मन्वंतरावतारश्च विष्णोर्हयशिरादयः ॥ १९ ॥ कौर्मं मात्स्यं नारसिंहं वामनं च जगत्पतेः ॥ क्षीरोदमथनं तद्वदमृतार्थं दिवौकसाम् ॥ २० ॥ देवासुरं महायुद्धं राजवंशानुकीर्तनम् ॥ इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्यः महात्मन ॥२१॥इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ॥ सूर्यवंशानुकथनं शशादाद्या नृपादयः ॥ २२ ॥ सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः ॥ खट्वांगस्य च मांधातुः सौभरेःसगरस्य च ॥ २३ ॥ रामस्य कोसलेंद्रस्य चरितं किल्बिषापहम् ॥ निमेरंगपरित्यागो जनकानां च संभवः ॥ २४ ॥ रामस्य भार्गवेंद्रस्य निःक्षत्रकरणं भुवः ॥ ऐलस्य सोमवंशस्य ययातेर्नाहुषस्य च ॥ २५ ॥

कूर्ममत्स्यवामनाद्यवताराः क्षीरोदमथनम् ॥ २० ॥ तत्र देवासुरसंग्रामः । नवमे राजवंशकीर्तनमिक्ष्वाकुजन्म सुद्युम्नजन्मन इलोपाख्यानं तारोपाख्यानं सूर्यवंशकथनम् ॥ २१ ॥ २२॥ सुकन्याख्यानम् । शर्यातेः ककुत्स्थस्य खट्वांगस्य मांधातुः सौभरेः सगरस्य च चरितम् ॥२३॥ श्रीरामचरितम् । निमेर्देहत्यागः ॥ जनकानां राज्ञां संभवः ॥ २४ ॥ परशुरामचरितं सोमवंश्यस्य ऐलस्य ययातेः ॥ २५ ॥

दौष्यंतेर्भरतस्य शंतनोर्भीष्मस्य च चरितं यदुवंशानुवर्णनम् ॥ २६ ॥ यत्र कृष्णाख्यो भगवानवतीर्णः। अथ दशमे तस्य वसुदेवगृहे जन्म ततो गोकुले वृद्धिः ॥ २७ ॥ पूतनायाः प्राणैः सह पयसः पानं शकटोच्चाटनम् ॥ २८ ॥ तृणावर्तवधो बकवत्सधेनुकप्रलबानां नाशः ॥२९॥ दावाग्नेः गोपानां रक्षणं कालियदमनं सर्पान्नंदमोचनम् ॥ ३० ॥ कात्यान्याः व्रतं यज्ञपत्नीष्वनुग्रहो विप्राणामनुतापनमिंद्रयागभंगो वातवर्षभयाद्गोवर्धनोद्धरणमिंद्रस्य सुरभेश्चाभिषेको रात्रिषु स्त्रीभिः सह क्रीडा ॥ ३१ ॥ ३२ ॥ शंखचूडवृषभासुरकेशिनां वधोऽक्रूरागमनं ततो

दौष्यंतेर्भरतस्यापि शंतनोस्तत्सुतस्य च ॥ ययातेज्यैष्ठपुत्रस्य यदोर्वंशोनुकीर्तितः ॥ २६ ॥यत्रावतीर्णो भगवान् कृष्णाख्यो जगदीश्वरः ॥वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥ २७ ॥ तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः ॥ पूतनाऽसुपयःपानं शकटोच्चाटनं शिशोः ॥२८॥तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ॥ धेनुकस्य सहभ्रातुः प्रलंबस्य च संक्षयः ॥ २९ ॥ गोपानां च परित्राणं दावाग्नेः परिसर्पतः ॥ दमनं कालियस्याहेर्महाहेर्नंदमोक्षणम् ॥३० ॥ व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः॥प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥३१॥गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ॥यज्ञाभिषेकः कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥३२॥ शंखचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ॥ अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥३३॥ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः॥गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥ मृतस्यानयनं सूनोः पुनः सांदीपनेर्गुरोः ॥ मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥३५॥कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ जरासंधसमानीतसैन्यस्य बहुशो वधः ॥घातनं यवनेंद्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥ आदानं पारिजातस्य सुधर्मायाः सुरालयात् ॥ रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥ ३७ ॥

रामकृष्णयोः प्रस्थानम् ॥ ३३॥ तदा व्रजस्त्रीणां विलापस्ततो मथुराऽवलोकनं गजमुष्टिकचाणूरकंसादीनां वधः ॥ ३४ ॥ सांदीपनेर्गुरोर्मृतपुत्रानयनं व्रजे उद्धवगमनं ततः स्त्रीणां संवादः ॥ ३५ ॥ जरासंधसैन्यवधः कालयवनघातो द्वारकायाः निर्माणं प्रवेशश्च ॥ ३६ ॥ पारिजातकस्य सुधर्मासभायाश्च स्वर्गादानयनम् । रुक्मिण्या हरणम् ॥ ३७ ॥

शिवस्य जृंभणं बाणभुजच्छेदनम् भौमासुरं हत्वा षोडशसहस्रकन्यानामानयनम् ॥ ३८ ॥ शिशुपालपौंड्रकशाल्वदंतवक्रशम्बरद्विविदपीठमुरप ञ्चजनादीनां वधः ॥ ३९ ॥ वाराणसीदहनं पांडवान्निमित्तीकृत्य कौरवादिभूभारहरणम् ॥ ४० ॥ एकादशे विप्रशापनिमित्तेन स्वकुलसंहारः भग वदुद्धवसंवादः ॥३१॥ यत्राखिलाऽऽत्मविद्या कथिता ततो लुब्धकबाणनिमितेन स्वधामगमनम् ॥४२॥ द्वादशे भविष्यद्राजानां वर्णनम् । युग लक्षणं तदनुरूपा वृत्तिश्चतुर्विधप्रलयाः ॥ ४३॥ राजर्षेः परीक्षितो देहत्यागो वेदानां शाखाविभागवर्णनम् मार्कंडेयाख्यानम् ॥ ४४ ॥ महापुरुष

हरस्य जृंभणं युद्धे बाणस्य भुजकृन्तनम् ॥ प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत् ॥ ३८ ॥ चैद्यपौण्ड्रकशा ल्वानां दंतवक्रस्य दुर्मतेः ॥ शंबरो द्विविदः पीठो मुरः पंचजनादयः ॥ ३९ ॥ माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम् ॥ भारावतरणं भूमेर्निमित्तीकृत्य पांडवान् ॥ ४० ॥ विप्रशापापदेशेन संहारः स्वकुलस्य च ॥ उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ॥ ४१॥ यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः॥ ततो मर्त्यपरित्याग आत्मयोगा नुभावतः ॥ ४२ ॥ युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ॥ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥४३ ॥ देहत्या गश्च राजर्षेर्विष्णुरातस्य धीमतः ॥ शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा ॥४४॥ महापुरुषविन्यासः सूर्यस्यजगदा त्मनः ॥ इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः ॥ लीलावतारकर्माणि कीर्तितानीह सर्वशः ॥ ४५ ॥पतितः स्खलितश्चार्तः क्षुत्वा वा विवशो ब्रुवन् ॥ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥ ४६ ॥

स्यांगोपांगादिवर्णनं सूर्यस्य गणैः सह प्रतिमासं भ्रमणं च । हे विप्राः । यद्वः पृष्टं तत्कथितम् । किंच हरेर्लीलावतारकर्माणि कीर्तितानि ॥४५ ॥ एतत्कीर्तनेन किमित्यत आह । कूपादिषु पतितः सोपानादिषु स्खलितो दुःखितः आतुरोऽपि क्षुतं कृत्वा विवशोऽपि हरये नमः इत्यु च्चैर्ब्रुवन् सर्वपातकान्मुच्यते ॥ ४६ ॥

एवं कीर्त्यमानो भगवान् पुंसां चित्तं प्रविश्य दुःखं धुनोति ॥ ४७॥ हरिकीर्त्तनादन्यत्सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति । यासु वाणीषु भगवत्कथा न ताः वाण्यो मृषा ॥४८॥ किंच कथासु भगवद्यशोऽनुगीयत इति यत्तदेव सत्यं मंगलं पुण्यं रम्यं रुचिप्रदं नृणां शोकार्णवशोषणम् ॥ ४९॥ अपि च यद्वचो हरेर्जगत्पवित्रं यशो नोच्चारयेत्तत्काकतुल्यं तीर्थं न तु ज्ञानिभिः सेवितम् ॥५०॥ किंच भगवद्गुणानुवर्णने प्रतिश्लोक



संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम् ॥ प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥ ४७ ॥ मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोऽक्षजः ॥ तदेव सत्यं तदु हैव मंगलं तदेव पुण्यं भगवद्गुणोदयम् ॥ ४८॥ तदेव रम्यं रुचिरं नवंनवं तदेव शश्वन्मनसो महोत्सवम्॥ तदेव शोकार्णवशोषणंनृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित्॥तद् ध्वांक्षतीर्थं नतु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥५०॥स वाग्विसर्गो जनताऽघसंप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि॥ नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वंति गायंति गृणंति साधवः॥५१॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥ ५२ ॥ यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥ ५३ ॥



मबद्धवत्यपि साधवोऽनंतस्य यशोंकितानि नामानि शृण्वंति गायंति गृणंति ॥ ५१ ॥ किंच ब्रह्मप्रकाशकं यद्‌ज्ञानं तदपि भक्तिहीनं चेन्न शोभते कुतः पुनरभद्रं ज्ञानं शोभते ॥ ५२ ॥ वर्णाश्रमाचारतपःशास्त्रादिषु यः परिश्रमः स यशोयुक्तायां श्रियामेव । कीर्त्तिः संपत्तिश्च केवलं तत्र परः पुरुषार्थः । भगवद्गुणानुवादादिभिस्तु श्रीधरपादपद्मयोर्विस्मृतिर्न भवति ॥ ५३ ॥

हे द्विजश्रेष्ठाः ।यूयं भूरिभागाः ॥५४॥ चित्तशुद्धिं भक्तिं विरागा[illegible]युक्तं ज्ञानं च तनोति कृष्णपादारविंदयोः स्मृतिरभद्राणि नाशयति । चित्तशुद्धिं भक्तिं विरागा[illegible]युक्तं ज्ञानं च तनोति ॥५४॥ हे द्विजश्रेष्ठाः ।यूयं भूरिभागाः

कृष्णपादारविंदयोः स्मृतिरभद्राणि नाशयति । चित्तशुद्धिं भक्तिं विरागा[illegible]युक्तं ज्ञानं च तनोति ॥५४॥ हे द्विजश्रेष्ठाः ।यूयं भूरिभागाः यतो मनसि हरिं विधाय तं भजत ॥ ५५ ॥ अहो अहमपि धन्यो यतः पुरा शुकमुखाच्छ्रुतमात्मतत्त्वमद्य स्मारितः ॥ ५६ ॥ हे विप्राः। एवं वासुदेवमाहात्म्यमशुभनाशकं वः कथितम् ॥५७॥ एवं यः इदं क्षणं श्रद्धावान् शृणुयात् श्रावयेत् स आत्मानं पुनाति ॥ ५८ ॥ एकादश्यां

अविस्मृतिः कृष्णपदारविंदयोः क्षिणोत्यभद्राणि शमं तनोतिच॥सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम्॥ ५४ ॥यूयं द्विजाग्रया बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम्॥ नारायणं देवमदेवमीशमजस्रभावा भजताऽऽविवेश्य ॥ ५५ ॥ अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात ॥ प्रायोपवेशे नृपतेःपरीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५६ ॥ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः॥ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥ ५७ ॥ य एवं श्रावयेन्नित्यं यामं क्षणमनन्यधीः ॥ श्रद्धावान्योऽनुशृणुयात्पुनात्यात्मानमेव सः ॥ ५८ ॥ द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतस्ततो भवत्यपातकी ॥ ५९ ॥ पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् ॥ उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥ ६० ॥ देवता मुनयःसिद्धाः पितरो मनवो नृपाः ॥ यच्छंति कामान्गृणतः शृण्वतो यत्र कीर्तनात ॥ ६१ ॥

द्वादश्यां वाशृण्वन् दीर्घायुः स्यात् अनश्नन् पठेत् स निष्पापः स्यात् ॥ ५९ ॥ पुष्करे मथुरायां द्वारवत्यामुपोष्येमां संहितां पठित्वा भयान्मुच्यते ॥ ६० ॥ इदं शृण्वतो गृणतः पुंसो देवमुनिसिद्धपितृमनुनृपाः मनोरथान् पूरयंति ॥ ६१ ॥

ऋग्यजूंषि सामान्यधीत्य मधुकुल्याः घृतकुल्याः पयःकुल्याः प्राप्नोति। तत् सर्वं फलमेतत्पाठात् प्राप्नोति ॥ ६२ ॥ किं चेमां पुराणसंहिता
मधीत्य नरो भगवत्पदं व्रजेत् ॥ ६३ ॥ विप्रः एतामधीत्य ज्ञानं प्राप्नुयात्। राजन्यः आसमुद्रांतां पृथ्वीं प्राप्नुयात्। वैश्यो निधिपतित्वं प्राप्नु
यात्। शूद्रः पातकान्मुच्येत ॥ ६४ ॥ कलिमलौघनाशको हरिरन्यपुराणादिष्वभीक्ष्णं न गीयते। अस्मिन् पुराणे तु कथाप्रसंगैः पदेपदेवर्णितः

ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविंदते ॥ मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम् ॥६२॥ पुराणसंहिता
मेतामधीत्य प्रयतो द्विजाः ॥ प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत् ॥ ६३ ॥ विप्रोऽधीत्याप्नुयात्प्रज्ञां राजन्योद
धिमेखलाम् ॥ वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात् ॥६४॥ कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र
न गीयते ह्यभीक्ष्णम् ॥ इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसंगैः ॥६५॥ तमहमजमनंतमात्मतत्त्वं
जगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥ ६६ ॥ उपचितनव
शक्तिभिः स्व आत्मन्युपरचितस्थिरजंगमालयाय ॥ भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय
॥ ६७ ॥ स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ॥ व्यतनुत कृपया यस्तत्त्व
दीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥ ६८ ॥ इति श्रीभाग० म० द्वा० द्वादशस्कन्धार्थसंग्रहो
नाम द्वादशोऽध्यायः ॥ १२ ॥

॥६५॥ तमनंतं ब्रह्मरुद्रेंद्रादिभिरज्ञातस्तोत्रमच्युतं नतोऽस्मि ॥ ६६ ॥ किंच सुरर्षभाय सनातनाय नवशक्तिभिरात्मनि रचितस्थिरजंगमा
लयाय हरये नमोऽस्तु ॥ ६७ ॥ स्वगुरुं शुकं प्रणमति। स्वसुखेनैव पूर्णचित्तो यः कृष्णलीलासारमाकृष्य तत्त्वदीपं पुराणं कृपया व्यस्तारयत्
तं व्यासपुत्रमखिलदुःखनाशकं शुकं नतोऽस्मि ॥ ६८ ॥ इति श्रीभागवते द्वादशस्कन्धे चूर्णिकायां द्वादशोऽध्यायः ॥ १२ ॥

१ प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः। २ तनैव व्युदस्तोऽन्यस्मिन्भावो यस्य सः।

त्रयोदशे पुराणानां संख्यामाह यथाक्रमम् । दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १ ॥ सूत उवाच । ब्रह्मा वरुणेंद्ररुद्रमरुतो दिव्यैः स्तोत्रैर्यं स्तुवंति सामगाः सांगपदक्रमोपनिषदैर्यं गायंति योगिनो मनसा यं पश्यंति देवादयो यस्यांतं न विदुस्तस्मै देवाय नमः ॥ १ ॥ हे शौनक ! पृष्ठे भ्राम्यमाणस्य मंदराचलस्य पाषाणाग्रघर्षणकंडूयनान्निद्राशीलस्य कूर्मरूपिणो भगवतः श्वासानिलाःवः पांतु।येषांश्वासानिलानां

सूत उवाच ॥ यं ब्रह्मा वरुणेंद्ररुद्रमरुतः स्तुन्वंति दिव्यैः स्तवैर्वेदैःसांगपदक्रमोपनिषदैर्गायंति यं सामगाः॥ ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो यस्यांतं न विदुः सुरासुरगणा देवाय तस्मै नमः॥१॥पृष्ठे भ्राम्यदमंदमंदरगिरिग्रावाग्रकंडूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पांतु वः॥ यत्संस्कारकलानुवर्तनवशाद्वेलानिभेना भसां यातायातमतंद्रितं जलनिधेर्नाद्यापि विश्राम्यति॥२॥पुराणसंख्यासंभूतिमस्य वाच्यप्रयोजने॥दानं दानस्य माहात्म्यं पाठादेश्च निबोधत॥३॥ब्राह्मं दशसहस्राणि पाद्मं पंचोनषष्टि च॥श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम्॥४॥

संस्कारलेशानुवशात्समुद्रस्य जलानां यातायातमद्यापि न विश्राम्यति ॥ २ ॥ अथ पुराणसंख्यासमूहं श्रीमद्भागवतस्य विषयं प्रयोजनं दानं पाठादेर्माहात्म्यं च शृणुत ॥ ३ ॥ ब्राह्मं १०००० पाद्मं ५५००० वैष्णवं २३००० शवम् २४००० ॥ ४ ॥

---

१ येषां श्वासानां संस्कारलेशानामनुवर्तनम । २ क्षोभमिषेण यातायाते समुद्रक्षोभस्य कारणत्वनिवारणायेदम् । ३ अथात्र विशेष उक्तो मात्स्यब्राह्मयोः अथ विष्णोः । परेशस्य नानाविग्रहधारिणः । एकं पुराणरूपं वै तच्छृणुध्वं द्विजोत्तमाः॥ १ ॥ तत्र ब्रह्मकल्पवृत्तांतोद्भवं ब्राह्मं हरेर्मस्तकं, पद्मकल्पवृत्तांतोद्भवं पाद्मं हृदयं, वाराहकल्पवृत्तांतोद्भवं वैष्णवं दक्षिणबाहुः श्वेतकल्पवृत्तांतोद्भवं शिवपुराणं वामबाहुःसारस्वतकल्पवृत्तांतोद्भवं वक्षःस्थलं, बृहत्कल्पवृत्तांतोद्भवं नारदीयं नाभिः, श्वेतवाराहकल्पवृत्तांतोद्भवं मार्कण्डेयं दक्षिणांघ्रिः, ईशानकल्पवृत्तांतोद्भवमाग्नेयं वामांघ्रिः, अघोरकल्पवृ० भविष्यं दक्षिणजानुः रथंतरकल्पवृ०

श्रीमद्भागवतं १८००० नारदं २५००० मार्कंडेयं ९००० आग्नेयं १५४०० ॥ ५ ॥ भविष्य १४५०० ब्रह्मवैवर्त १८००० लैंगं ११०००
॥ ६ ॥ वाराहं २४००० स्कांदं ८११०० वामनं १०००० ॥ ७ ॥ कौर्मं १७००० मात्स्यं १४००० गारुडं १९००० ब्रह्मांडम् १२००० ॥ ८ ॥



दशाष्टौ श्रीभागवतं नारदं पंचविंशति ॥ मार्कंडं नव वाह्नं तु दशपंचचतुःशतम् ॥ ५ ॥ चतुर्दश भविष्यं स्यात्तथा पंचशतानि च ॥ दशाष्टौ ब्रह्मवैवर्तं लिंगमेकादशैव तु ॥ ६ ॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ स्कांदं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ एकोनविंशत्सौपर्णं ब्रह्मांडं द्वादशैव तु ॥ ८ ॥ एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ॥ तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥ ९ ॥

एवं पुराणसंदोहश्चतुर्लक्षः कथितः ॥ ९ ॥

---

ब्रह्मवैवर्तं वामजानु, कल्पांतवृत्तांताद्भवं लैंगं दक्षिणगुल्फः, मनुकल्पवृत्तांतोद्भवं वाराहं वामगुल्फः, तत्पुरुषकल्पवृत्तांतोद्भवं स्कांदं हरे रोमाणि, शिवकल्पानुषंगिकं वामनं शरीरत्वक्, लक्ष्मीकल्पवृत्तांतोद्भवं कौर्मं पृष्ठं कल्पादौ सप्तकल्पवृत्तांतोद्भवं मात्स्यं मेढ्रं, गरुडकल्पवृत्तांतो ०गारुडं दक्षिणपादाग्रं, भाविष्यकल्पानां वृत्तांतोद्भवं ब्रह्मांडं वामपादाग्रम् ॥ एवं सत्त्वरजस्तमआत्मकाष्टादशपुराणरूपो हरिः पुराणेषु प्रकाशते । तत्र सात्त्विकपुराणे विष्णोरधिकमाहात्म्यं राजसे प्रकृतिब्रह्मसूर्याणां तामसेऽग्निशिवभैरवादीनां महात्म्यम्। मिश्रे तु पितॄणां माहात्म्यम् । एवमष्टादशमुख्यपुराणसंदोहश्चतुर्लक्ष एव । अथ च—अष्टादशभ्यश्च पृथक् पुराणं यत्प्रदृश्यते । विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥ एतेषां च पुराणानां व्याकर्ता तु भवेन्मनुः ॥ १॥ अथाष्टादशोपपुराणनामानि—सनत्कुमारम् १ नारसिंहम् २ बृहन्नारदीयम् ३ शिवरहस्याख्यम् ४ दौर्वाससम् ५ कापिलम् ६ वामनम् ७ भार्गवम् ८ वारुणम् ९ कालिकाख्यम् १० सांबम ११ नंदिकृतम् १२ आदित्यपुराणम् १३ पाराशरम् १४ वासिष्ठम् १५ भगवतीभागवतम् १६ गणेशपुराणम् १७ हंसपुराणम् १८ इति एवं मुद्गलरेणुकाविष्णुधर्मोत्तरशिवधर्मोत्तरादिलघुपुराणान्यप्यष्टादशैव संति । महाभारतं त्वितिहासो रामायणादीनि च अतोऽत्र मुख्यचतुर्लक्षपुराणसंदोहमध्येऽष्टादशसाहस्रं श्रीभागवतमिष्यत इति ।

इदं पुरा भगवता नाभिपद्म स्थिताय ब्रह्मणे कृपया प्रकाशितम्॥१०॥इदमादिमध्यांतेषु वैराग्याख्यानयुतम् ॥ ११ ॥ सर्ववेदांतसारं ब्रह्मात्मैकत्वलक्षणं मोक्षैकप्रयोजनम् ॥ १२ ॥ ईदृशपुराणपुस्तकं भाद्रपदपौर्णमास्यां सुवर्णसिंहासने विहितं यो ददाति स परमां गतिं याति ॥ १३ ॥

इदं भगवता पूर्वं ब्रह्मणे नाभिपंकजे ॥ स्थिताय भवभीताय कारुण्यात्संप्रकाशितम् ॥१०॥आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ॥ हरिलीलाकथाव्रातामृतानंदितसत्सुरम् ॥११॥सर्ववेदांतसारं यद्ब्रह्मात्मैकत्वलक्षणम्॥वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्॥१२॥प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम्॥ददाति यो भागवतं स याति परमां गतिम् ॥ १३ ॥ राजंते तावदन्यानि पुराणानि सतां गणे ॥ यावद्भागवतं नैव श्रूयतेऽमृतसागरः॥१४॥सर्ववेदांतसारं हि श्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्॥१५॥ निम्नगानां यथा गंगा देवानामच्युतो यथा ॥ वैष्णवानां यथा शंभुः पुराणानामिदं तथा १६ ॥ क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ॥ तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः॥१७ ॥ श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन्पारमहंस्यमेकममलंज्ञानंपरं गीयते ॥ तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ १८ ॥

किं च यावद् भागवतं नैव श्रूयेते तावदन्यपुराणानि साधुसभायांशोभंते॥१४॥इदं सर्ववेदांतसारम् । एतद्रसतृप्तस्यान्यत्र प्रीतिर्न स्यात्॥१५॥ नदीनां यथा गंगा श्रेष्ठा देवानां यथा विष्णुर्वैष्णवानां यथा शिवः ॥ १६ ॥ क्षेत्राणां यथा काशी तथा पुराणेष्विदं श्रेष्ठम् ॥१७॥ श्रीमद्भागवतमिदं वैष्णवानां प्रियं यत्र परमहंसैः प्राप्यं ज्ञानं गीयते तच्छृण्वन् पठन् भक्त्या विचारणपरो नरो विमुच्येत ॥ १८ ॥

१ यावन्न दृश्यते साक्षाच्छ्रीमिद्भागवतं परम् इति पाठः सर्वसमतः । २ दृश्यत इ० पा० ।

ग्रथांते मंगलमाचरति। अथ श्रीभागवतरूपो ज्ञानप्रदीपः कल्पादौ ब्रह्मणे येन ब्रह्मरूपेण नारदाय प्रकाशितो नारदरूपेण व्यासाय व्यासरूपेण शुकाय शुकरूपेण राज्ञे परीक्षिते च तत् सत्यं विशोकं श्रीनारायणाख्यं तत्त्वं धीमहि॥ १९॥ यः इदं ब्रह्मणे व्याचचक्षे तस्मै वासुदेवायभगवते नमः ॥ २० ॥ किंच यः परीक्षितं संसारसर्पदंशादमूमुचत् तस्मै योगींद्राय ब्रह्मरूपिणे शुकाय नमः ॥ २१॥ यतस्त्वं नो नाथः अतःहेदेवेश।



कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेणच नारदाय मुनये कृष्णायतद्रूपिणा॥ योगींद्राय तदात्मनाऽथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १९ ॥ नमस्तस्मै भगवते वासुदेवाय साक्षिणे ॥ य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ २०॥ योगींद्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे॥संसारसर्पदष्टं यो विष्णुरातममूमुचत ॥२१॥ भवेभवे यथा भक्ति पादयोस्तव जायते ॥ तथा कुरुष्व देवेश नाथस्त्वं नो यतःप्रभो ॥२२॥ नामसंकीर्तनं यस्य सर्वपापप्रणाशनम् ॥ प्रणामो दुःखशमनस्तं नमामि हरिं परम्॥ २३॥इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां संहितायां वैयासिक्यां द्वादशस्कंधेपुराणसंख्यादानमाहात्म्यादिवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ हरिः ॐ ॥ समाप्तोऽयं द्वादशस्कन्धः ॥ १२ ॥ समाप्तं चेदं पुराणम् ॥

भवेभवे यथा तव पादयोर्भक्तिर्जायेत तथा कुरु ॥ २२ ॥ यस्य नामकीर्तनं सर्वपापनाशकं प्रणामो दुःखशमनस्तं हरिं नमामि ॥ २३ ॥ इतिश्रीमद्भागवते महापुराणे द्वादशस्कंधे चूर्णिकायां त्रयोदशोऽध्यायः ॥ १३ ॥ अस्मिन्स्कंधे वृत्तानुष्टुप्श्लोकानां संख्या ५७२ ॥ अनुमानेन चूर्णिकासंख्या ५०५ ॥ श्रीकृष्णार्पणमस्तु ॥ समाप्तोऽयं ग्रंथः ॥ ॥ शुभं भवतु ॥ सर्वे जनाः सुखिनो भवंतु ॥

| नाम. | की. रु. आ. |
|---|---|
| श्रीमद्भागवत–मूल श्लोक और आनन्दाम्बुनिधिपद्य भाषाटीकासमेत--( रीवाँधीश महाराज रघुराजसिंह देवजूकृत ) इसकी रचना देखनेही योग्य है. ... ... | २०–० |
| श्रीमद्भागवत--भाषाटीका माहात्म्य और शंका समाधान समेत अत्युत्तम जिसमें ९०० दृष्टान्त कथाके सिवाय हैं चौथीबार छपी है ग्लेज कागज ... ... | २५–० |
| " तथा देशी कागज ... ... ... ... | २१–० |
| श्रीमद्भागवत--दशमस्कन्धमात्र भाषाटीका दृष्टान्तसमेत. ... ... ... ... | ६–० |
| श्रीमद्भागवत–गुजराती भाषामें गंगाजमुनी टीका सहित। और श्रीजीके दर्शनीय चित्र समेत खुलापत्रा यह टीका अति सरल व सुललित शब्दोंमें बनी हुई है, और मूलका सम्पूर्ण आशय इसमें इस तौर खुलासा करके दर्शाया है कि, कठिनसे कठिन भी भाव साधारण ज्ञानवान् पुरुषोंके भी हृदयमें झट आजावें। गुजराती भाषा जाननेवाले भक्तोंको एक २ प्रति अवश्य पास रखनी चाहिये... | २५–० |
| श्रीमद्भागवतमाहात्म्य–भाषाटीकासह। इसमें–भक्तिमाहात्म्य और गोकर्णोत्पत्ति विप्रमोक्ष भागवत श्रवणविधिइत्यादिहै | ०–१० |
| श्रीमद्भागवताद्यपद्यव्याख्याशतक–(जन्माद्यस्य श्लोकके सौ अर्थ ) ... ... .... .... | २–० |
| भागवतलीलाकल्पद्रुम–श्रीमद्भागवतके सब चरित्र( जन्माद्यस्य इस श्लोकसे ) .... .... .... | १–४ |
| श्रीमद्भागवतशंकानिवारणमञ्जरी–बारहों स्कन्धोंकी शास्त्रीय रीतिसे शंकाओंका निवारण भलीभाँति वर्णितहै .... | २–० |

संपूर्ण पुस्तकोंका बडा सूचीपत्र अलग है मँगा लीजिये।

पुस्तक मिलनेका ठिकाना–

**खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालयाध्यक्ष--मुम्बई.**

